यजुर्वेद इत्यृचां पर्युदासो मा भूदिति । सर्वमित्युक्तं । पुनः की-
दृशे । सखिले खिलशब्देनागारभ्याधीताः कचित्कर्मण्यविनियु-
क्ता मन्त्रगणा उच्यन्ते । प्रवायुमच्छ, मुचन्तु मा शपथ्या, दृंहस्व पृथि-
वीं चेत्येवमादयः । सह खिलैर्वर्त्तत इति सखिलः । तस्मिन्सखिले । न
नु खिलानामपि यजुर्वेदमध्य एव सत्वात्किमर्थं पृथगुपदेश । उच्यते ।
एषां क्वचित्कर्मण्यविनियुक्तत्वादृष्यादिज्ञानं निष्प्रयोजनं स्यादिति, न
निष्प्रयोजनं स्यादिति शङ्कानिरासायेत्यदोषः । एषामपि ब्रह्मयज्ञा-
ध्ययनपारायणव्रतस्तोमादौ विनियोगस्य सत्वात् । एतान्यविदि-
त्वेत्यादिना ऋष्याद्यज्ञात्वाऽध्ययनादावनिष्टमाप्नोत्युक्तेर्ज्ञात्वाऽध्ययना-
ध्यापनादिक्रियायामिष्टसिध्युक्तेरेषामप्यृष्यादिज्ञानमपेक्ष्य यत एवे-
त्यभिप्रायः । स्वाध्यायमपि योऽधीते मन्त्रदैवतवित् सोऽमुष्मिँल्लोके
देवैरपीज्यते इति । तथा सर्वमेतच्छन्दोदैवतमार्षं च विज्ञाय यत्किंचिज्ज-
पहोमादि करोति तस्य फलमश्नुते इत्यृष्यादिज्ञाने फलश्रुतेश्च । पु-
नः कीदृशे यजुर्वेदाम्नाये । सशुक्रिये । शुक्र आदित्यः । शुक्र । "तद
एष एव शुक्रो य एष तपतीति श्रुतेः," आदित्यश्च घर्मः । "असौ वा आ-
दित्यो घर्म इति श्रुतेः" । अतो घर्म आदित्यः शुक्र इत्येकोऽर्थः । अतः
शुक्रस्य घर्मस्य सम्बन्धी यो मन्त्रविभागः । ऋचं वाचमित्यादिक
स शुक्रियशब्देनोच्यते तेन सह वर्त्तत इति स शुक्रियस्तस्मिन्सशुक्रिये
अयं च शुक्रियो भागो दिवैव पठ्यते न रात्रौ । तथा अयमरण्ये
एव पठ्यते न ग्रामे । शुक्रियादन्यो यो वेदभागः स त्वनियमेना-
यत्र पठ्यते । अतो धर्मभेदाच्छुक्रियस्य पृथङ्निर्देशः । किं कृत्वा ।
तं विवस्वन्तं सूर्यं त्रयीमयं वेदत्रयात्मकमर्चिष्मन्तं दीप्तिमन्तं अभिध्याय
अभीत्यत्यादरे । अत्यादरेण भक्तिश्रद्धापूर्वकं आराध्यत्वेन मनसि चि-
न्तयित्वा(१) । "सैषा त्रय्येव विद्या तपतीति श्रुतेः," त्रयीमयमित्युक्तं

(१) शतपथब्राह्मणस्य दशमकाण्डान्तर्गतस्य द्वितीयस्य कण्डिकायामुक्तेति ॥

एवंविधस्य सूर्यस्य स्मरणं कृत्वा ऋषिदैवतच्छन्दसामनुक्रमणं करिष्यामः। इत्यर्थः। तं विवस्वन्तमित्युक्तं। तत्र तं कमित्यपेक्षायामाह ये-न विवस्वता सूर्येण मण्डल दक्षिणमक्षि हृदय चाऽधिष्ठितं चाश्रितं। मण्डल आकाशे जगत्प्रकाशकत्वेन परिदृश्यमान तेजोमय सूर्यमण्डलं, दक्षिणमक्षीति पुरुषस्य दक्षिण चक्षु। पुरुषस्य हृदयं च। एतत्त्रयमाक्रम्य यः स्थितवानित्यर्थः। तथा च श्रूयते(१)। "स एषऽएव मृत्युर्यऽ एष एतस्मिन्मण्डले पुरुषो यश्चाय दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावति ष्ठतोतावितिʼʼ। पुन कं त। यतो यस्माद्विवस्वतो, भगवान्याज्ञवल्क्यो मुनिः शुक्लानि विशुद्धानि अपौरुषेयत्वादन्यैरदृष्टानि यजूंषि प्राप्तवान्। तथा च श्रूयते(२)। "आदित्यानी मानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्तʼʼ इति। तत्र केषां चिन्मते यजुषां छन्दो नास्तीत्याह।

### यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते.

एकेषामाचार्याणां मते यजुषां इषे त्वेत्यादीनां छन्दो न विद्यते। गायत्र्युष्णिगादिनामक छन्दो नास्ति, कुतो न विद्यते इत्यपेक्षायामाह। अनियताक्षरत्वादिति। गायत्र्यादि छन्दो हि नियताक्षरं चतुर्विंशत्यक्षरा गायत्रीत्याद्यक्षरसङ्ख्यानियमश्रवणात्। न च यजूंष्यपि नियताक्षराणि। अतस्तेषु नियताक्षरसङ्ख्यास्वरूपं छन्दो नास्तीत्यर्थः। एकेषामित्युक्तत्वात्केषां चिन्मते यजुषामपि छन्दोऽस्तीति प्रतीयते। तत्र छन्दश्शास्त्रपद्धतौ। छन्दोगायत्री "दैव्येकʼʼमित्यादिपिङ्गलादुक्तप्रकारेणैकाक्षरद्व्यक्षरत्र्यक्षरादीनि छन्दांसि यजुष्षु कल्पनीयानि। तानि चास्मिन्ग्रन्थे नोक्तानि। अतः प्रथमं तान्यष्टप्रकाराणि गायत्र्यादीनि छन्दांसि प्रदर्श्यन्ते॥

(१) पूर्वोक्तकाण्डकान्तर्गतेयमिति॥

(२) शतपथब्राह्मणीयचतुर्दशबृहदारण्यककाण्डस्य कण्डिका ज्ञातव्येति॥

तच ऋग्वेदप्रातिशाख्ये। "गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापती ।
पङ्क्तिस्त्रिष्टुब्जगती च सप्त छन्दांसि तानिह । चतुरक्षरप्रभृतीनि चतु
र्भिः परं परं । दैवान्यपि च सप्तैव सप्त चैवासुराण्यपि । एकोत्तरा
णि देवानां तान्येकादशावधि । एकादशान्यसुराणां तत्र पञ्चद-
शाक्षरत्वात् । तानि त्रीणि सामगण्यसमानानि स नाम तत् । एकं
भवत्युपिग्छन्दस्तथा गच्छति सम्पद । एकनिप्रभृतीन्याहुर्युतानि चतु
रक्षरम् । ऋषिछन्दांसि ते प्रायो मन्त्र श्लोकश्च वर्तते । तत्पादौ य
जुषां छन्दसाम्नां तु द्वादशां त्रय । तत्पादस्तोपा ऋषिछन्दसां चतुर्थो
भागो यजुषां छन्दो वेदितव्य । साम्ना छन्दो द्वौ भौ पादौ वेदितव्यौ ।
ऋचां छन्दस्त्रय । गायत्र्यादिजगत्यन्तानेकविन्यधियां तु तत् । चार्यैव
सप्तमाक्षरो ब्राह्मी वर्ग. षडुत्तर । ब्रह्मराणि षड्विंशद्गायत्री ब्रा
ह्मणी गिता । यजुषां षडृचा नि षट् साम्ना द्वादश सम्पदि । एको-
त्तरो यजुर्वर्गः साम्नां वर्गस्तु द्व्युत्तर' । ऋचां तु त्र्युत्तरो वर्गो ब्रा
ह्मो वर्ग षडुत्तरः । क्रमोणां तु त्रयो वर्ग समका एव नेतरे । ऋ
षिछन्दांसि गायत्री सा चतुर्विंशत्यक्षरास्तच पादाश्चत्वारो वा प
ञ्चाक्षरा इत्यादि प्रजापतिप्रभृतीनां छन्दांसि व्याख्यातानि, तेषु ऋ
षिछन्दांसि भोदाहरणानि वक्ष्यन्ते । गायत्री सा चतुर्विंशत्यक्षरेत्यादि-
ना । छंदोगानामपि । देवासुरप्रजापतीना यजु सामर्चां च छन्दां-
सि भवन्ति । दैव्येका गायत्री । पञ्चदशासुराणा । प्रजापतेरष्टौ । च
त्वा दशाष्टादशा इतरेषां क्रमशोऽथ प्रतिछन्दोऽक्षरविद्द्विदैवयजुषो-
रेकैकेन तथा हानिरसुराणां प्रजापतेश्चतुर्भिर्वृद्धिर्ब्राह्म्या साम्नाम
चां त्रिभिस्त्राविमौ द्वौ त्रिवर्गौ छन्दसामानाम्य तु चयं चयं समेत्यार्थ,
परस्ये ब्राह्मयक्तत्वा च द्विगुणा यजुषां च चतुर्गुणाऽऽदितस्तादयुक्ता ।
'स्वयजुषां च साम्नाम्न्यौ । प्राजापत्या च षोडशहति । तथा । पादसे-
देन पादानां विभागोऽभिषमीपत्त । छन्दस.सम्पदं रां तायायां मन्वेत

पादतइति। छन्दसा पादतो याया सम्पद मन्यत ता ता सम्यक् पूर्वंमभिसमीक्ष्य पादाय पदा नामभेदेन तु पादाना विभाग कार्यं । प्रायोऽर्थो वृत्तमितीते पादज्ञानस्य हेतव । प्राय अर्थं इत्य । इत्येते त्रय पादज्ञानस्य हेतवो भवन्ति । प्रायस्त्रिष्टुप्प्राय, अनुष्टुप्प्राय इति । विप्रतिषेधपाते तु पूर्वं पूर्वं पर पर । एषामेव प्रायाऽर्थवृत्त रूपाणां विशेषाणा सन्निपाते तु पूर्वं निमित्त पूर्वं भवति । पर निमित्त पर भवति पूर्वो हेतुरुत्तराद्बलीयानित्यर्थ, प्रायाऽर्थयोर्विरोधे प्रायो बलीय । प्रायो बलीयस्त्वात् दूर्ध्वो व्याजस्य सनिता यद् ष्वभिरिष्यपादा जिज्ञासेत् । पिङ्गलोऽप्याह छन्द । गायत्री दैव्येक । आसुरी पञ्चदश । प्राजापत्याऽष्टौ । यजुषा षट । साम्ना द्वि । ऋचा त्रि । द्वौ साम्ना वर्धेत । त्री स्त्रीणां । चतुरश्चतुर प्राजापत्याया । एकैकशेषे । जह्यादासुरी । तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीतिरित्येवं सप्तसंज्ञानि, एकविंशति सप्ताक्षरपरव्यापि छन्दांसि सन्ति । तत्र चतुर्विंशत्यक्षरा गायत्री अष्टाविंशत्यक्षरा उष्णिक । द्वात्रिंशदक्षराऽनुष्टुप्षट्त्रिंशदक्षरा बृहती । चत्वारिंशदक्षरा पङ्क्ति । चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, अष्टाचत्वारिंशदक्षरा जगती । द्वापञ्चाशदक्षरा अतिजगती । षटपञ्चाशदक्षरा शक्वरी । षष्ट्यक्षरा अतिशक्वरी । चतुःषष्ट्यक्षरा अष्टि । अष्टषष्ट्यक्षरा अत्यष्टि । द्वासप्तत्यक्षरा धृति । षटसप्तत्यक्षरा अतधृति । अशीत्यक्षरा कृति । चतुरशीत्यक्षरा प्रकृति । अष्टाशीत्यक्षरा आकृति । द्वानवत्यक्षरा विकृति ॥ षण्णवत्यक्षरा संस्कृति । शताक्षराऽभिकृति । चतु शताक्षरोत्कृतिरिति । एकमेकाक्षर छन्दो दैवी गायत्री । एक द्व्यक्षर दैव्युष्णिक् । एक त्र्यक्षरदैव्यनुष्टप । एक चतुरक्षर दैवी बृहती । पञ्चाक्षर दैवीपङ्क्ति । द्वे षडक्षरे यजुर्गायत्री दैवीत्रिष्टुप् । द्वे सप्ताक्षर दैवी जगती । यजुरुष्णिक । द्वे अष्टाक्षरे यजुरनुष्टुप् । प्राजापत्या गाय

ष्णी च । द्वे नवाक्षरे आसुरीजगती यजुर्बृहती च । द्वे द्वादशाक्षरे आसुरी त्रिष्टुप् यजुः पङ्क्तिश्च । द्वे एकादशाक्षरे आसुरीपङ्क्तिर्याजुषी त्रिष्टुप् च । चत्वारि द्वादशाक्षराणि साम्नगायत्री यजुर्जगती आसुरी बृहती ॥ प्राजापत्योष्णिक् । एकं त्रयोदशाक्षरं आसुर्यनुष्टुप् । द्वे चतुर्दशाक्षरे आसुर्युष्णिक् । साम्न्युष्णिक् । एकं पञ्चदशाक्षरं आसुरी गायत्री । द्वे षोडशाक्षरे प्राजापत्यानुष्टुप् । साम्न्यनुष्टुप् च । सप्तदशाक्षरं नास्ति । द्वे अष्टादशाक्षरे साम्नबृहती ऋग्गायत्री च । एकोनविंशत्यक्षरं नास्ति । द्वे विंशत्यक्षरे प्राजापत्या बृहती साम्नपङ्क्तिः एकमेकविंशत्यक्षरं ऋगुष्णिक्, एकं द्वाविंशत्यक्षरं साम्नत्रिष्टुप् । त्रयोविंशत्यक्षरं नास्ति । चत्वारि चतुर्विंशत्यक्षराणि । प्राजापत्या पङ्क्तिः, साम्नजगती । ऋगनुष्टुप् । आर्षी गायत्री च । पञ्चविंशतिषड्विंशत्यक्षरे नस्तः । एकं सप्तविंशत्यक्षरं ऋग्बृहती । द्वे अष्टाविंशत्यक्षरे प्राजापत्या त्रिष्टुबार्षी चोष्णिक् । एकोनत्रिंशदक्षरं नास्ति । एकत्रिंशदक्षरं ऋचां पङ्क्तिः । एकत्रिंशदक्षरं नास्ति । द्वे द्वात्रिंशदक्षरे प्राजापत्या जगती । आर्षी अनुष्टुप् च । एकं त्रयस्त्रिंशदक्षरं ऋचां त्रिष्टुप् । चतुस्त्रिंशदक्षरे नस्तः । त्रीणि षट्त्रिंशदक्षराणि ऋग्जगती । ब्राह्मी गायत्री आर्षी बृहती च । अन्यानि न सन्ति । एकं चत्वारिंशदक्षरमार्षीपङ्क्तिः । एकं द्विचत्वारिंशदक्षरं ब्राह्मी उष्णिक् । एकं चतुश्चत्वारिंशदक्षरं आर्षी त्रिष्टुप् । द्वे अष्टाचत्वारिंशदक्षरे आर्षी जगती । ब्राह्मी अनुष्टुप् च । एकं चतुष्पञ्चाशदक्षरं ब्राह्मी बृहती । द्वे षष्ट्यक्षरे ब्राह्मी पङ्क्तिरतिशक्वरी च । एकं षट्षष्ट्यक्षरं ब्राह्मी त्रिष्टुप् । द्वे द्वासप्तत्यक्षरे ब्राह्मी जगती धृतिश्चेति । एषु पठिताक्षरैर्यत्राक्षरसङ्ख्या न पूर्यते तत्र यथागमेन व्यूहेन पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेदित्यनेन पूरणं । तदसम्भवे न्यूनाधिकभेदेन निचृद्भुरिजौ द्वाभ्यां विराट्स्वराजावि-

न्युपायेन छन्दः कल्पनीयं ॥ एवमेकाक्षरप्रभृत्येकैकाक्षरवृध्या चतु-र्धिकशताक्षरपर्यन्तानि छन्दांसि सन्ति । ततोऽभ्यधिकाक्षराणां यजुषां छन्दो नास्ति छन्दोगपरिशिष्टेऽपि। सर्वछन्दांस्येकेन पञ्चा-क्षरेण शङ्कुमती भवति। अथैकाक्षरहीना निचृदेव।क्षराभूरिक्।न्यू-ना विराट्। द्व्यधिका स्वराट्। अल्पीयसयापिपादिनी लक्ष्म-ध्या यवमध्ये ति। यवाभ्यां यकारवकारविकर्षेण न्यूनानि छन्दांसि पूरयेत्। नशब्देन च तद्व्यत्ययं पदपद्धत्या च। लशब्देन च। न्यून-त्वे तु यच्छ पूरयति। तदेवं सर्वयजुषामक्षराणि गणयित्वा ग-णयित्वा अनेन प्रकारेण यजुःषु कल्पनीयं। सूत्रस्य चायमेवार्थः। यानि यजूंषि नियताक्षराणि तेषां छन्दो नास्त्येव ॥ यानि च नि-यताक्षराणि तेषां छन्दोऽस्त्येव। यानि च नियताक्षराणि इपेत्वेत्या-दीनि भिन्नान्यनेकच्छन्दोलक्षणयुक्तानि तेषां छन्दो विद्यतएवेति। यु-क्तोऽयं पक्ष, अन्यथा एकाक्षरप्रभृतीनां चतुरधिकशताक्षरपर्यन्ता-नां छन्दसां पाक्षिकवैयर्थ्यापत्ते। तस्मादेवमेव व्याख्येयं। एकेषां य-जुषामनियताक्षराणां सप्ताधिकशताक्षरपर्यन्तानां छन्दो नास्त्येव। ततोऽर्वाचीनसङ्ख्याक्षराणां त्वस्त्येवेति कश्चिदेतच्छन्दोऽभ्यनुज्ञा-सिद्धमिति पूर्वं प्रतिज्ञातं। तत्र के द्रष्टारइत्याकाङ्क्षायामाह ॥

## द्रष्टारऋषयः स्मर्त्तारः परमेष्ठ्यादयः ।

परमेष्ठि आदि प्रथमो येषां ते परमेष्ठ्यादय, संहितायामादौ दर्शपूर्णमासमन्त्रा पठिता। तेषां च परमेष्ठीऋषि ॥ परमेष्ठ्यादय-इति परमेष्ठीप्रजापतिप्रभृतयो मन्त्राणां द्रष्टारऋषयइत्युच्यन्ते। द्र-ष्टारइत्यस्यैव व्याख्यानं स्मर्त्तारइति। परमेष्ठ्यादयो हि पूर्वस्मिन्क-ल्पे नानाविधदुष्करतपश्चरणादियागिष्टकर्मजनितसुकृतसंस्कारादन्त-र्हितोषधमान, सृष्टप्रतिबुद्धकल्पादौ यज्ञ विषया भिध्यायमाना

कश्यपाग्ने। येनाययादृष्य यामाम्नानात् कल्याणमर्ह यास्यामीति यात्रादृष्ट्युच्यते। अतश्च यः परमेष्ठी देवं मन्त्रं पश्यति तस्य मन्त्रस्य स ऋषिरित्युच्यते। अतएवाह यास्कः "ऋषिर्दर्शनादिति"। दर्शनमेव गानमत्र॥ छन्दसां स्वरूपमाह।

छन्दांसि गायत्र्यादीनि।

(१)अत्र छन्दांसि गायत्र्युष्णिगनुष्टुबित्यक्षोक्तानि गायत्र्यादीनि छन्दांसि ज्ञेयानि। न ऋषिदैवच्छन्दसां ज्ञानं विनाऽपि मंत्राणामध्ययनादिसिद्धिः, किमर्थं तत्कथनमित्याशङ्क्य तदज्ञानेऽनिष्टमाह।

' एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजते तस्य ब्रह्म निर्वीर्यं यातयामं भवति।

. एतानि ऋषिदैवतच्छन्दांस्यविदित्वा अज्ञात्वा योऽधीते यो वेदं पठति योऽनुब्रूते अन्यं पाठयति रुद्राध्यायादिकं जपति आज्यादिना जुहोति यः यजते स्वार्थं यागं करोति याजयते स्वयमृत्विग्भूत्वा परान्याजयति तस्य पुरुषस्य ब्रह्म वेदो निर्वीर्यं स्वकार्यसाधने शक्तिहीनं यातयामं किञ्चित्कारं निष्फलं भवति। ऋष्यादिकमज्ञात्वाऽध्ययनेऽध्यापने जपे होमे यजने याजने वा प्रयुक्ता मन्त्रा निर्वीर्यत्वात्स्वकार्यसाधका न भवन्तीत्यर्थः। अनिष्टान्तरमाह।

अथान्तरा श्वगर्तं वाऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान्भवति॥

अथ ऋष्याद्यज्ञात्वाऽध्ययनादिकरणानन्तरं श्वगर्तमन्तरा आपद्यते श्वगर्तमध्यं प्राप्नोति। श्वानां गर्तः अशुचिस्थानं नरकमुच्यते।

(१) गायत्र्यादयश्छन्दांसि दैवतर्षिच्छन्दांसि सामवेदे दैवतब्राह्मणे प्रतिपादितान्यत-स्तस्माद्विज्ञेयानीति॥

नर्स । मन्त्राणां वर्णामकत्वेन चक्षुषा दर्शनासम्भवात् । अतएव अ-
र्षांर इति पर्यायोपादानम् । श्रुतिगतानामपश्यदित्यादीनां व्याख्या-
नार्थं द्रष्टारइत्युक्तम् । अथ देवतास्वरूपमाह ।

देवता मन्त्रान्तर्भूता अग्न्यादिका हविर्भाजः स्तुति-
भाजो वा ।

या मन्त्रान्तर्भूता मन्त्रमध्यपठिता मन्त्राक्षरप्रेयस्वरूपा हविर्भाजः
स्तुतिभाजो वा । अग्न्यादिकास्ता देवताः । मन्त्रवर्णादिवता अग्निसो-
मेन्द्रविष्ण्वादयो देवता इत्यर्थः । तत्र कायन हविर्भजन्ते कायन स्तु
तिम् । तथा च यास्कः । "यस्य सूक्तं यजति यस्मै हविर्निरूप्यतइति" ।
तथा इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाजइति । तथा यत्का-
मऋषिर्यस्यां देवता या सायैऽऽपत्यमिच्छं स्तुतिं प्रयुङ्क्ते तद्दैवतः स
मन्त्रो भवतीति च । ननु भवतु महाप्रभावानामग्न्यादीनां देवतात्वं
अन: ग्रावादीनां त्वचेतनानां कथं । नहि तानि हविःप्रतिग्रहणसम-
र्थानि । अत आह स्तुतिं जानन्तीत्यतआह ।

अनः ग्रावोखाग्न्योमवेपकपालेध्मोलूखलादयश्च
प्रतिमाभूताः ।

यथा विष्ण्वादिदेवतानां सुवर्णादिमय्यः प्रतिमा भवन्ति ताश्च
देवतारूपा अपि देवतावत्पूज्यन्ते स्तूयन्ते वाञ्छितं प्रयच्छन्ति । एवमनः
ग्रावादयो देवतारूपा अपि देवतानां प्रतिमाभूता देवता ज्ञेयाः ।
तथा च यास्कः "अपि त्वदेवता देवतावत्स्तूयन्ते तथाऽश्वप्रभृतीन्यो
षधिपर्यन्तानीति" । अन ग्रावादिषु प्रतिमाभूतासु विष्ण्वादिप्रतिमा-
स्विवाधिष्ठात्र्यो देवताः सन्ति तास्ताभिमतं सर्वं करिष्यन्तीत्यभिप्रायः ।
एतच्च देवतानां च विग्रहवत्त्वाङ्गीकारे पक्षे । अग्न्यादिशब्दानामेव
देवतात्वपक्षे त्वियमाशङ्कापि नास्ति । यथा ऽग्न्यादिशब्दानां देवतात्वं

तथाऽन्‌ः शाखादिशब्दानामपि भवियति शब्दत्वा विशेषात्॥ अथ छन्दसां स्वरूपमाह।

छन्दाᳬसि गायत्र्यादीनि।

(१)अथ छन्दाᳬसि गायत्र्युष्णिगनुष्टु बित्यचोक्तानि गायत्र्यादीनि न्दाᳬसि ज्ञेयानि। न ऋषिदेवछन्दसा ज्ञानं विनाऽपि मन्त्राणामध्ययनादिसिद्धे, किमर्थं तत्कथनमित्याशङ्का तदज्ञानेऽनिष्टमाह।

एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजते तस्य ब्रह्म निर्वीर्यं यातयामं भवति।

एतानि ऋषिदेवतछन्दांस्यविदित्वा अज्ञात्वा योऽधीते यो वेदं पठति योऽनुब्रूते अन्यं पाठयति रुद्राध्यायादिकं जपति व्याहृत्यादिमन्त्रेण यो यजते स्वार्थं याग कुरुते याजयते स्वयमृत्विग्भूत्वा पराज्याजयते तस्य पुरुषस्य ब्रह्म वेदो निर्वीर्यं स्वकार्यसाधने शक्तिहीन यातयामाकिञ्चित्करं निष्फलं भवति। ऋष्यादिकमज्ञात्वाऽध्ययनेऽध्यापने जपे होमे यजने याजने वा प्रयुक्तो मन्त्रो निर्वीर्यत्वात्स्वकार्यसाधको न भवतीत्यर्थः। अनिष्टान्तरमाह।

अथान्तरा श्वगर्तं वाऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान्भवति॥

अथ ऋष्याद्यज्ञात्वाऽध्ययनादिकरणानन्तरं श्वगर्तमन्तरा प्रापद्यते श्वगर्तमध्य प्राप्नोति। शुनां गर्त अशुचिस्थानं नरकमुच्यते। अनेन पापेन नरके पततीत्यर्थः। तथा स्थाणु वा ऋच्छति। ऋच्छगतींद्रियप्रयत्नमूर्तिभावे, स्थाणुं मूर्तिभावं स्थाणुरूपत्वं प्राप्नोति याता-

(१) गायत्र्यादिछन्दसां देवतनिर्वचनानि सामगदैवतब्राह्मणे प्रतिपादितान्यत-स्तस्माद्बोध्यानीति॥

दिना भग्नशाखः शुष्को वृक्षः स्थाणुरित्युच्यते । एवंविधवृक्षयोनिं याती त्यर्थः । तथा प्रमीयते वा एतेन पापेन प्रमीयते अचिरान्मरणं प्राप्नोति । परमायुषः पूर्वमेवापमृत्युना म्रियतइत्यर्थः । "अथवा प्रमीयते अन्धो वा बधिरो वा भवति" । एष ह वै प्रमायुकोऽन्धो वा बधिरो भवति । प्रपूर्वस्यास्य धातोरेवमर्थत्वादर्शनात् । तथा । पापीयान्भवति । अतिशयेनपापकारी भवति "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति श्रुतेः" । अतिशयेन पापः पापीयान् । चाण्डालम्लेच्छादिजातिषु जायतइत्यर्थः । तथा च स्मृतिः । अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । अध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः । इति । तथा । ऋषिछन्दो दैवतानि ब्राह्मणार्थं स्वरानपि । अविदित्वा प्रयुञ्जानो मन्त्रकण्टकउच्यते । इति । कण्टकः पीडकइत्यर्थः । तथा मन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणानृषीन् । कृत्तद्धितादीनज्ञात्वा यजते यागकण्टकःइति । छन्दोगानामार्षेयब्राह्मणेऽपि श्रूयते । "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वाऽऽपद्यते वा प्रमीयते पापीयान्भवति । यातयामान्यस्य छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति" । तदेवमृष्याद्यज्ञानेऽनिष्टप्राप्तिमभिधायाथ तेषां ज्ञाने यद्भवति तदाह ॥

अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत् ॥

एतानि ऋषिदैवतच्छन्दांसि विज्ञाय विशेषेण ज्ञात्वा योऽधीते वेदं पठति । तस्य ब्रह्म वीर्यवद्भवति । प्रबलशक्तियुक्तं यदर्थं प्रयुज्यते तत्कारणसमर्थं भवति ॥ ब्रह्मशब्देन वेदमुच्यते । अर्थज्ञाने च फलविशेषमाह ॥

अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति ॥

यो द्विजो मन्त्राणामृष्यादिज्ञानवानर्थञ्च मन्त्राणां मर्थमभिजानाति । तस्य ब्रह्म वीर्यवत्तरं अतिशयेन वीर्यवत् । स्वकार्यसाधने अतिप्रबलशक्तिमद्भवति वेदेऽप्यर्थज्ञानशून्यस्य निन्दा सन्दृश्यते । अर्थज्ञानवतः प्रशंसा च । स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थवित्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मेति' । ऋष्यादिमन्त्रार्थज्ञतया कृत जपादिकमपि सकलसाधक भवतीत्यतआह ॥

जपित्वा हुत्वेष्ट्वा
तत्फलेन युज्यते ॥१॥

ऋषिदैवतछन्दोमन्त्रार्थज्ञानवान्पुरुषो जपहोमयागान्कृत्वा तत्फलेन जपादिफलेन युज्यते सम्बन्धं प्राप्नोति । तादृशैर्वीर्यवत्तरैर्ज्ञातार्थैर्ज्ञातर्षिदैवतछन्दस्कैर्मन्त्रैः कृतं जपहोमयागादिकमवश्यं फलद भवतीत्यर्थः । अथ संहितापठितं सर्वमन्त्रसाधारणमेकमृषिमाह ॥

इषे त्वादि खमृब्रह्मान्तं विवस्वानपश्यत् ॥ (१)

इषे त्वोर्जे त्वेत्यत आरभ्योंऽखं ब्रह्मेत्यन्तं सर्वं मन्त्रजातं विवस्वानपश्यत् । तत्सर्वं स्मृतवान् । "आदित्यानीमानि यजूंषि वा आहुरिति श्रुतेः" ॥

ततः प्रतिकर्मविभागेन ब्राह्मणानुसारेण ऋषयो वेदितव्याः ॥

तत इति सर्वकर्मसु सर्वसाधारणं विवस्वन्तं ऋषिं विदित्वा ततोऽनन्तरं प्रतिकर्म कर्मणि कर्मणि सर्वकर्मसु विभागेनेति । ए-

---

(१) इषे त्वादि खमृब्रह्मान्तं विवस्वानपश्यत् ... माध्यन्दिनीयसर्वानुक्रमपाठः ॥

तत्कर्मैतस्य मन्त्रस्यायमृषिरस्यायं अस्यायमित्येवं रूपेण वि-
भागेन ब्राह्मणानुसारेणेति तत "एतं परमेष्ठी प्राजापत्यो यज्ञमपश्य-
द्यद्दर्शपूर्णमासौ प्रजापतिः प्रथमां चितिमपश्यदित्यादि" ब्राह्मणवा-
क्यानुसारेण वक्ष्यमाणा ऋषयो वेदितव्या ज्ञातव्याः। अथ सर्वेषां
दर्शपूर्णमासमन्त्राणां साधारणमृषिमाह ॥

परमेष्ठी प्राजापत्यो दर्शपूर्णमासमन्त्राणामृषिः ॥

प्रजापतेरपत्यं परमेष्ठीसंज्ञः। सर्वेषां दर्शपूर्णमासमन्त्राणामृ-
षिर्ज्ञातव्यः। "तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्ण-
मासाविति श्रुतेः"। यत्र तु ऋषिविशेषोऽभिधीयते ॥ तथा पुरा।
वषट्कारोऽपच्छदीति होतुं विश्वावसुरित्यादौ तत्रोभावृषी भव-
तः। दर्शपूर्णमासमन्त्राणामेव पुनरपि वैकल्पिकानृषीनाह ॥

देवा वा प्राजापत्याः ॥

अथ वा प्रजापतेः पुत्रा देवा दर्शपूर्णमासमन्त्राणामृषयः। ते दे-
वा अकामयन्तेत्युपक्रम्य "एतदै हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासा-
विति श्रुतेः" ॥ अत उभयत्रापि विकल्पः ॥ (१)

इषे त्वा शाखाऽनुष्टुप् ॥

इषे त्वेत्यस्य यजुषः शाखादेवता अनुष्टुप्छन्दः इयं दैव्यनुष्टुप्
अष्टाक्षरत्वात्। एतच्च यजुषां छन्दः सद्भावपक्षे ज्ञेयम् ॥

विनियोगः कल्पकारोक्तः ॥

वेदितव्य इति शेषः। अस्य मन्त्रस्य। तस्मिन्कर्मणि विनियो-
गः। अनेन मन्त्रेणेदं कर्म कर्तव्यं। अनेनेदमित्येवं विधौ मन्त्रा-

(१) अत्राप्यादौ विशेषेऽनुक्ते यद्दृष्टं कारणं। ममाग्ने वर्चो विहवेष्वस्तु य-
दद्वेन्द्रियावानस्तु पुषेम ॥ मत्रत्रमन्तौ आदशकातससत्त्वयाच्यक्षेण पुतना जयेम। इ-
त्यस्य मन्त्रस्य परमेष्ठी प्राजापत्यऋषिर्देवा वा प्राजापत्या ऋषयः शाखा दे-
वता दैव्यनुष्टुप्छन्दः शाखाछेदने विनियोगः ॥ इति ज्ञातव्यं। तैत्ति०सं०४कां०
७ प्रपा० अ०२४ ॥

णां विनियोगः । कल्पकारोक्त एवेह वेदितव्यः । कर्मानुष्ठानवेलायां मन्त्राणां विनियोगज्ञानमावश्यकं । तदज्ञाने दोषस्य प्रागुक्तत्वात् । यतः कल्पकारेण कात्यायनेन इषेत्वेति शाखां छिनत्ति । ऊर्जे त्वेत्यनुमार्ष्टि वायवस्थेति वत्सानपाकरोति इत्यादिसूत्रैरुक्तः अतः स इह नोच्यते । तत एव ज्ञेय इति भावः । तत्र इषे त्वेत्यस्य शाखाच्छेदने विनियोगः ॥

ऊर्जे त्वा ॥

पूर्वोक्तस्य शाखानुष्टुप्त्वस्यैवमित्यतिदेशः ऊर्जे त्वेत्यस्यापि यजुषः शाखा देवता दैव्यनुष्टुप्छन्द त्र्यक्षरत्वात् । शाखाया अनुमार्जने पर्णादिपातनेन समीकरणे विनियोगः ॥

वायवो वायव्यं ॥

वायवस्थेति यजुर्वायव्यं वायुर्देवता यस्य तद्वायव्यं "वाय्वृतुपित्रुषसो यदिति यत्" । दैवी बृहती छन्दः । चतुरक्षरत्वात् । वत्सापाकरणे विनियोगः ॥

देवो वऽऐन्द्रम् ॥

देवो वः सवितेत्यादि यजुरैन्द्रं इन्द्रो देवता यस्य तदैन्द्रं । अथ द्वाषष्ट्यक्षरत्वात् । द्वाभ्यामक्षराभ्यामूना विराड् छन्दः । अथ वा द्वाभ्यामधिका भुरिगक्षरा वा स्वराट् द्वाभ्यामधिका साम्नी पङ्क्तिर्वा स्वराट् । गाः शाखयोपस्पर्शने विनियोगः ॥ (१)

यजमानस्य शाखा ॥

यजमानस्य पशूनित्यस्य शाखा देवता यजुर्बृहती वा आसुरी जगती वा । नवाक्षरत्वात् । शाखोपगूहने विनियोगः ॥

---

(१) अत्र पद्धतिकारेण विशेषोऽभिहितः । देवोऽस्यग्निर्देवो द्युतोऽत्रापेति दशेति ॥ ऽअघ्न्ये सुभगचारव ॥ शुद्धा कर्मण्या ऽअनमीवा यथास-न्नुपेयः । इति मन्त्रस्य परमेष्ठी ऋषिः उपवेषो देवता ब्राह्मी उष्णिक् छन्दः उपवेषकरणे विनियोगः । इति वक्ष्यः ॥

## वसोर्वायव्यं ॥

वसो पवित्रमसीत्येतद्यजुर्वायव्यं वायुर्देवतं दैवीजगती यजुरुष्णिग्वा । सप्ताक्षरत्वात् । शाखायां पवित्रबन्धने विनियोगः ॥

## द्यौर्मातरिश्वनऽउखा ।

द्यौरसि मातरिश्वनस्त्वमनयोरुखा देवता । द्यौरिति दैवीजगतीरुष्णिग्वा । सप्ताक्षरत्वात् । स्थाल्यादाने विनियोगः । मातरिश्वन इति द्वाविंशत्यक्षरत्वात्साम्न्यनुष्टुप्प्राजापत्या जगती वा स्थाल्यधिश्रयणे विनियोग ॥

## वसोर्वायव्यम् ॥ (१)

दिवोश्च वसोः पवित्रमिति वायव्यं वायुरस्य देवता प्राजापत्या पंक्तिर्वा साम्नीजगती वा ऋचामनुष्टुब्वा । चतुर्विंशदक्षरत्वात् । उखायाउपरि पवित्रस्य निधाने विनियोगः ॥

## देवस्त्वा पयः ॥

देवस्त्वा सवितेत्यस्य यजुष पयो देवता साम्नीत्रिष्टुप् द्वाविंशत्यक्षरत्वात् । दोग्ध्र्याउखायामासिच्यमाने पयसि जपे विनियोग ॥

## कामधुक्षः प्रश्नः ॥

कामधुक्ष इत्यस्य यजुषः प्रश्नो देवता दैवी बृहतीछन्दः । चतुरक्षरत्वात् गोनामप्रश्ने विनियोग ।

## सा विश्वायुस्त्रीणि गव्यानि ॥

सा विश्वायुरित्यादीनि त्रीणि यजूंषि गव्यानि । एषां गौर्देवतेत्यर्थः । आद्यस्य दैवीबृहती चतुरक्षरत्वात् उत्तरयोर्दैवीपङ्क्तिः पञ्चाक्षरत्वात् गोराशीर्दानि विनियोगः ।

---

(१) द्वितीय कण्डिका खण्डपञ्चकरूपपाठ. कात्यायनसर्वानुक्रमे नास्तीति बोध्य. ||

## इन्द्रस्यैन्द्रम् ।

इन्द्रस्य त्वा भागोसीत्येतदैन्द्रं इन्द्रदैवतं द्वादशाक्षरत्वात् । प्राजापत्योष्णिक्सामगायत्री वा यजुर्जगती वा आसुरी बृहती वा आतञ्चने विनियोगः ॥

## विष्णो हव्यं ॥ २ ॥

विष्णो हव्यं रक्षस्व हव्यो देवता । दैवीत्रिष्टुप्यजुर्गायत्री वा षडक्षरत्वात् ।(१) अपिधाने विनियोगः ॥ २ ॥

## अग्नऽइदमाग्नेये ॥

अग्ने व्रतपते इदमहमित्येते यजुषी आग्नेयो अनयोरग्निर्दैवतेत्यर्थः । प्रथमा आर्च्युष्णिक् एकविंशत्यक्षरत्वात् ॥ द्वितीया प्राजापत्योष्णिक् सामगायत्री वा । आसुरी बृहती वा प्राजापत्योष्णिग्वा । द्वादशाक्षरत्वात् । व्रतग्रहणे पर्यायेण विनियोगः ।

## कस्त्वा प्राजापत्यम् ।

कस्त्वा युनक्तीत्येतत्प्रजापतिदैवतं । साम्नी त्रिष्टुब्द्वाविंशत्यक्षरत्वात् । प्रणीतानामाहवनीयस्योत्तरतो निधाने विनियोगः ।

## कर्म्मणे स्रुक्शूर्पम् ।

कर्मणे वामित्य स्रुक्शूर्पं देवता । स्रुक् च शूर्पं च स्रुक्शूर्पं इत्येकवद्भावे निर्देशः । अष्टाक्षरत्वात् । प्राजापत्यागायत्री यजुष्यनुष्टुब्वा । शूर्पाग्निहोत्रहवण्योरादाने विनियोगः ॥

## प्रत्युष्टं द्वे राक्षसे ।

प्रत्युष्टं निष्टप्तमिति द्वे यजुषी राक्षसे । अनयोरक्षो देवतेत्यर्थः । द्वादशाक्षरत्वात् सामगायत्री । यजुर्जगती वा आसुरी बृहती वा । प्राजापत्योष्णिग्वा शूर्पाग्निहोत्रहवण्योः प्रतपने विनियोगः । अग-

---

(१) अभिधाने इति पद्धतिपुस्तकपाठः ॥

यीरुच्चारणानन्तरं यथा सर्वः कार्यः राक्षसमन्त्रत्वात् ॥

उरु वस्त्र रक्षोघ्नं सर्वत्र ।

सर्वत्र रिचमन्त्रे मीत्येतद्-

ध्रुवैम्न रक्षोघ्नं । एतेन यजुषा प्रसरत्यसोः हननं क्रियतइत्यर्थः । न केवलमत्र किं तु सर्वत्रैतद्यजुरित्येव विधत्तेवेत्यर्थः । लिङ्गादुक्तारिष्टं देवता । अथ वा अयमर्थः । सर्वतरिचमित्यस्य रक्षोघ्नं मन्त्रदेवतेति एवं काण्वसंहिताभाष्ये व्याख्यातमस्ति । प्राजापत्या गायत्री यजुरनुष्टुब्वा । अष्टाक्षरत्वात् । अन. प्रतिगमने विनियोगः

धूरसि धूः ।

धूरसीत्यस्य धूर्देवता । चतुर्विंशत्यक्षरत्वात् । प्राजापत्या पंक्तिर्वा । भामजगती वा । स्वराडनुष्टुब्वा । युगधुरोऽभिमर्शने विनियोग ।

देवानां विष्णुस्त्वा नः ।

देवानामसि विष्णुस्त्वा क्रमतामित्यनयोरनो देवता । देवानामिति ब्राह्मी अनुष्टुप् अष्टाचत्वारिंशदक्षरत्वात् । ईषाभिमर्शने विनियोगः । विष्णुस्त्वा दैवी त्रिष्टुप् । यजुर्गायत्री वा । षडक्षरत्वात् । अनःस्वारोहणे विनियोगः । पात्रीमो हविर्ग्रहणपक्षे धूरसि देवानां विष्णुस्त्वेतिवा पात्रीविती अपि विनियोगः ॥

उरु हविष्याः ॥

उरुवातायेत्यस्य यजुषो हविषा व्रीह्यादयो देवताः दैवीपंक्तिः पञ्चाक्षरत्वात् । हविःप्रेक्षणे विनियोग ।

अपहतं रक्षः ।

अपहतमित्यस्य रक्षोदेवता दैवीत्रिष्टुप् यजुर्गायत्री वा । षडक्षरत्वात् । अपद्रव्यनिरसने तदभावे हविरभिमर्शने वा विनियोगः ।

राक्षसत्वादृषी सर्गः ॥

यच्छन्ताए हविष्याः ।

यच्छन्तां पञ्चेत्यस्य हविष्या देवता । पञ्चाक्षरत्वाद्दैवीपंक्तिश्छंदः । श्विरासमने विनियोगः ।

देवस्य त्वा सावित्रम्० ।

देवस्य त्वा सवितुरित्येतत्सावित्रं सवितृदैवतं ॥ न केवलमत्र । किंतु सर्वत्र देवस्यत्वेत्येतत्सवितृदेवत्यमेव। प्राजापत्याबृहती साम्नपंक्तिर्वा विंशत्यक्षरत्वात् । अत्र हविर्ग्रहणे विनियोगः ॥

अग्नये लिंगोक्ते ।

अग्नये जुष्टमग्नीषोमाभ्यां जुष्टमित्यनयोर्लिंगेनैवाग्निरग्नीषोमौ च यथाक्रमं देवते उक्ते,अग्नये प्राजापत्या गायत्री याजुषी अनुष्टुब्वा । अष्टाक्षरत्वात् । अग्नियोमाभ्या आसुरीत्रिष्टुप् । याजुषी पंक्तिर्वा । द्वयोर्हविर्निर्वापे विनियोगः ॥

भूताय त्वा हविः

भूतायत्वेत्यस्य हविर्देवता । अष्टाक्षरत्वात्प्राजापत्या गायत्रीछंदः यजुषीअनुष्टुब्वा । शेषाभिमर्शने विनियोगः ॥

स्वः सूर्यः

स्वरभित्यस्य सूर्यो देवता । षडक्षरत्वाद्दैवीत्रिष्टुप् यजुर्गायत्री वा प्राचीक्षणे विनियोगः ॥

दृꣳ० इन्तां गृहाः ।

दृꣳहन्तान्दुर्यादित्यस्य गृहा देवता नवाक्षरत्वादासुरी जगती । यजुर्बृहती वा छंदः अनसोहविर्ग्रहणपक्षे अनसोऽवरोहणे विनियोग. । पात्रीतो ग्रहणपक्षे तूत्थाने ॥

पृथिव्यास्त्वा हव्यम् ।

पृथिव्यास्त्वेत्यस्य हव्यं देवता प्राजापत्या बृहती साम्नपंक्तिर्वा छंदः । विंशत्यक्षरत्वात् । यथपस्य पयाहविःसादने विनियोगः ॥

## पवित्रे लिंगोक्तं । -

पवित्रे स्थइत्यस्य यजुषो लिंगेनैव पवित्रे दैवतमुक्तं । सप्ताक्षरत्वाद्देवी गायत्री यजुरुष्णिग्वा पवित्रछेदने विनियोगः ।

## सवितुर्देवीः प्रोक्षिताश्चापानि ।

सवितुर्व. देवीरापः । प्रोक्षितास्थेत्येतानि त्रीणि यजूंष्याद्यानि एषामापो देवता इत्यर्थः । सवितुर्वः प्राजापत्या पङ्क्तिः साम्नजगती वा । स्वपामनुष्टुब्वा । चतुर्विंशत्यक्षरत्वात् प्रोक्षणुत्पवने विनियोगः । देवीरापअष्टाविंशदक्षरत्वाद्द्वाभ्यां न्यूना आर्षी पङ्क्तिः । उद्दिङ्गने विनियोगः । प्रोक्षिता दैवीबृहती चतुरक्षरत्वात् । प्रोक्षणीनाम् प्रोक्षणे विनियोगः ।

## अग्नये लिङ्गोक्ते ।

अग्नये त्वाऽग्नीषोमाभ्यां त्वेत्यनयोर्लिङ्गेनैवाग्नीरग्नीषोमौ च क्रमेण देवते उक्ते । अग्नये त्वा आसुरीजगती । यजुर्बृहती वा । नवाक्षरत्वात् । हविःप्रोक्षणे विनियोगः ।

## अग्नीषोमाभ्यान्त्वा ।

एकादशाक्षरत्वादासुरीपङ्क्ति । याजुषी त्रिष्टुब्वा हविःप्रोक्षणे विनियोगः ॥

## दैव्याय पात्राणि

दैव्याय कर्मणेत्यस्य पात्राणि देवताः, अष्टाविंशदक्षरत्वात् प्राजापत्या त्रिष्टुप् पात्रप्रोक्षणे विनियोगः ॥ १ ॥

## शर्मास्यदित्याः कृष्णाजिनम् ।

---

(१) इद सूत्रखण्ड कात्यायनसर्वानुक्रमे नास्ति पाठ. ॥

\

शर्मासि अदित्यास्त्वगित्यनयो कृष्णाजिनं देवता । शर्मेत्यनुष्टुप्श्वदरत्वात् । कृष्णाजिनादाने विनियोगः. अदित्या आसुर्यनुष्टुप्चयोदशाक्षरत्वात् । कृष्णाजिनास्तरणे विनियोगः ॥

अवधूतꣳ रक्षः ।

अवधूतमित्यस्य रक्षोदेवता आसुर्यनुष्टुप्त्रयोदशाक्षरत्वात् । राक्षसत्वादुदकालम्भः । अवधूनने विनियोगः ॥

अद्रिर्ग्रावोलूखले

अद्रिरसि ग्रावासि इत्येते द्वे यजुषी उलूखले । अनयोरुलूखलम् देवता । षोडशाक्षरत्वात्प्राजापत्यानुष्टुप्सामानुष्टुब्वा उलूखलस्थापने विनियोगः ॥

अग्नेर्हविः

अग्नेस्तनूरित्यस्य हविर्देवतैकविंशत्यक्षरत्वात् । ककुप्छाक् हविरावपने विनियोगः ॥

बृहत्स इदम् मौसले, ।

बृहद्ग्रावाऽसि स इदम्देवेभ्यइत्येते यजुषी मौसले । मुसलदैवते । बृहत्आसुरी जगती यजुर्बृहती वा नवाक्षरत्वात् । मुसलादाने विनियोगः । सइदम् प्राजापत्यानुष्टुप्साम्नामनुष्टुब्वा मुसलावधाने विनियोगः ॥

हविष्कृदधिदैवतं वागधियज्ञं पत्नी ।

हविष्कृदेहीत्यस्याधिदैवतं दैवतेषु वा देवता । अनियतम् यज्ञविषये पत्नी देवता । पञ्चाक्षरत्वाद्दैवीपङ्क्ति. पत्न्याआग्नीध्रस्य वा आह्वाने विनियोग' ॥

कुक्कुटो वाक् ।

कुक्कुटोसीत्यस्य वाग्देवता । सप्तविंशत्यक्षरत्वादार्ग्यबृहती दृषदुपलयोराहनने विनियोग. ॥

वर्षवृद्धमसि० शूर्पम् ।

वर्षवृद्धमित्यस्य शूर्पं देवता दैवीत्रिष्टुप्यजुर्गायत्री वा षडक्षरत्वात् शूर्पादाने विनियोगः ॥

प्रतित्वा हविः

प्रतित्वेत्यस्य हविर्देवता आसुरीजगती यजुर्बृहती वा नवाक्षरत्वात् । हविरादाने विनियोगः ॥

परापूतमपहतं० राक्षसे

परापूतं० रक्षोऽपहतं० रक्षस्त्येते यजुषी राक्षसे रक्षोदेवते प्रथमा सामोष्णिक् आसुर्युष्णिग्वा चतुर्दशाक्षरत्वात् । निष्पवने विनियोगः । अपहतम् षडक्षरत्वाद्यजुर्गायत्री दैवीत्रिष्टुब्वा तुषनिरसने विनियोगः । राक्षसत्वादुदकालम्भनं ॥

वायुर्वो देवो वस्सवि(ता)।

वायुर्वो विविनक्तु॥ देवो व सविता इत्यनयोर्मन्त्रयोर्देवता । वायुः । दैवी जगती यजुरुष्णिग्वा समाक्षरत्वात् । विवेचने विनियोगः । देवो व साम्नीत्रिष्टुप् द्वाविंशत्यक्षरत्वात् । अभिमर्शने विनियोगः ॥

धृष्टिरस्यपवेष. ।

धृष्टिरसीत्यस्योपवेषो देवतादैवी बृहती नवाक्षरत्वात् उपवेषादाने विनियोगः ॥

अपाग्नेऽअग्निमामादं जहि निष्क्रव्यादं सेधा देवयजं वह ।

अपाग्ने अग्निं आदेवयजमित्येते यजुषी अग्निदेवते । अपाग्ने प्राजापत्यानुष्टुप् । सामानुष्टुब्वा । अङ्गाराणाम् प्राकरणे विनियोगः । आदेवयजं दैवी जगती यजुरुष्णिग्वा। समाक्षरत्वात् । अङ्गाराहरणे विनियोगः ॥

## ध्रुवमसि षण्णाम् कपालानि ।

ध्रुवमसि; धरुणमसि । धर्त्रमसि विश्वाभ्यस्त्वा । चितस्थ । भृगूणामित्येतेषाम् षण्णाम् यजुषाम् कपालानि देवता । षण्णाम् षण्णाम् कपालोपधाने विनियोगः । भृगूणामित्यस्याङ्गिरसामू-नि । ध्रुवमसि ऋचा चतुर् । एकाधिका चतुर्विंशत्यक्षरत्वात् । धरुणमसि ब्राह्मी गायत्री ऋग्जगती वा षट्त्रिंशदक्षरत्वात्, धर्त्रमसि । ऋचास्त्रिष्टुप्चत्वारिंशदक्षरत्वात्, विश्वाभ्यस्त्वा याजुषीत्रि-ष्टुप् ऽआसुरी पङ्क्तिर्वा । एकादशाक्षरत्वात् । चितस्थ दैवीत्रि-ष्टुप्यजुर्गायत्री वा षडक्षरत्वात् । भृगूणाम् । आसुर्यनुष्टुप् नयो दशाक्षरत्वात् ॥

### अग्ने ब्रह्माग्नेदम् ।

अग्ने ब्रह्म गृभ्णीष्वेत्येतदग्निदैवतम् । मध्यमकपालस्योपर्यङ्गारनि-धाने विनियुक्तम् । दैवीजगती याजुषी उष्णिग्वा । सप्ताक्षरत्वात् ॥

### धिषणाऽसि दार्षदम् ।

धिषणासीत्येतद्दृषद्दैवतम् । कृष्णाजिनस्योपरि दृषदुपधाने विनियुक्तम । आसुरी गायत्री पञ्चदशाक्षरत्वात् । अथ धर्मासि अवधूतम् अदित्यास्त्वगित्येतेषाम् सर्वं प्रागुक्तमिति । पुनर्भो-क्तम् ॥

### दिवः शम्या ।

दिवस्कम्भनीरित्यस्य शम्यादैवता दृषदोऽधस्ताच्छम्योपोहने वि-नियोगः । दैवी जगती यजुरुष्णिग्वा सप्ताक्षरत्वात् ।

### धिषणोपलम् ।

धिषणाऽसि पार्वतेयीत्येतद्यजुरोपलं । उपलदैवतं । उपलनिधा-ने विनियुक्तं प्राजापत्यानुष्टुप् । साम्न्यनुष्टुप् षोडशाक्षरत्वात् ।

## धान्यमसि षण्णाठं॰ हविः ।

धान्यमसि । प्राणाय । उदानाय । व्यानाय । दीर्घामनु । चक्षुषे त्वा इत्येतेषां षण्णां यजुषां हविर्देवता धान्यमसि आसुरीजगती यजुर्बृहती वा । नवाक्षरत्वात् । प्राणाय दैवी बृहती चतुरक्षरत्वात्, उदानाय दैवीपङ्क्तिः पञ्चाक्षरत्वात्, व्यानाय दैवीबृहती चतुरक्षरत्वात् । दीर्घामनु त्रिष्टुप् । त्रयस्त्रिंशदक्षरत्वात् । चक्षुषे त्वेति दैवीबृहती चतुरक्षरत्वात् । धान्यमसीत्यस्य तण्डुलावापे विनियोगः । प्राणायेत्यादित्रयाणां पेषणे । दीर्घामित्यस्य प्रोक्षणे । चक्षुषे त्वेत्यस्येक्षणे ।

## महीनामाज्यम् ।

महीनां पयोऽसीत्यस्याज्यं देवता । यजुर्गायत्री दैवीत्रिष्टुब्वा षडक्षरत्वात् । आज्यनिर्वापे विनियोगः ॥ ४ ॥(१)

## संवपामि हविः ।

संवपामीत्यस्य हविर्देवता । दैवीबृहती चतुरक्षरत्वात् । पात्र्यां संवापे विनियोगः । देवस्य त्वेत्यस्य प्रागुक्तम् ।

## समापऽओषधम् ।

समापऽओषधीभिरित्येतद्यजुरार्षं । आपोऽस्य देवताश्चार्षं । एकोनाब्राह्मीपङ्क्तिः एकोनचत्वारिंशदक्षरत्वात् । उपसर्जनीप्रतिपादे विनियोगः ।

## जनयत्यै त्वेदठं॰ हविः

जनयत्यै त्वा । इदमग्ने रिदं अग्नीषोमयो रित्येतेषां त्रयाणां हविर्देवता । जनयत्यै त्वा । प्राजापत्या गायत्री याजुषीअनुष्टुब्वा अष्टाक्षरत्वात् । संवपने विनियोगः । इदमग्नेः, दैवीबृहती चतुरक्षर-

---

(१) वेदोऽसि वेदधठं॰ इति कात्यायनसर्वानुक्रमात् ॥

त्वात् । इदमग्नीषोमयोरिति दैवीजगती यजुरुष्णिग्वा सप्ताक्षरत्वात् । उभयो र्वैमन्त्यालम्भने विनियोगः[1] ।

इषे त्वाऽऽज्यम् ।

इषे त्वे त्यस्याज्यम् देवता । दैव्यनुष्टुप्चतुरक्षरत्वात् आज्याभिमर्षणे विनियोगः ॥

घर्मोऽसि पवित्रं पुरो डाशः । (१)

घर्मोऽसि विश्वायु, उरु प्रथाः । अ ग्निष्टे । देवस्त्वा । मा भेः । अस-मेरु, इत्येषाम् मन्त्राणाम् पुरोडाशो देवता । घर्मोऽसि यजुर्गायत्री । दै-वी त्रिष्टुब्वा । षडक्षरत्वात् । पुरोडाशाभिमर्षणे विनियोगः । उरुप्र-था । साम्नीबृहती कल्पगायत्री वा अष्टाक्षरत्वात् । प्रथने विनियोगः । अग्निष्टे । प्राजापत्या गायत्री । यजुरनुष्टुब्वा अष्टाक्षरत्वात् । अ-द्भिरभिमर्षने विनियोगः । देवस्त्वा । प्राजापत्यानुष्टुप् । साम्न्य-नुष्टुब्वा । षोडशाक्षरत्वात् श्रपणे विनियोगः, मा भेः यजुर्गायत्री दैवी त्रिष्टुब्वा । षडक्षरत्वात् आलम्भने विनियोगः । असमेरुः । साम्नीबृ-हती गायत्री अष्टादशाक्षरत्वात् शृताभिवासने विनियोगः ॥

त्रिताय चयाणाम् त्रितो द्वितऽएकतः क्रमेण ।

त्रितो द्वित एकतः । क्रमेण । त्रिताय त्वेत्यादीनाम् त्रयाणाम् य जुर्षा क्रमेण त्रितो द्वित एकतः अपाम् देवता । त्रिताय त्वेत्यस्य त्रित, द्वितायेत्यस्य द्वित, एकतायेत्यस्यैकतः । आद्ययोर्दैवी बृहती च-तुरक्षरत्वात् । एकताय दैवी पङ्क्तिः पञ्चाक्षरत्वात् । अपाम्योदक-निनयने विनियोगः ॥

आददऽइन्द्रस्य स्फ्यः ।

---

(१) अन्तरिक्षर्ठ०राक्षसम् । इति कराग्रशास्त्रीयसर्वानुक्रमवादः ॥ अन्तरिक्षमि-त्यस्य परमेष्ठी ऋषीरक्षो देवताऽऽसुर्यनुष्टुप्छन्दः पर्यग्निकरणे विनियोग. ॥

आददेऽध्वरकृतम्, इन्द्रस्य बाहुरसीत्यनयोः स्फ्यो देवता । आद्य-स्य दशाक्षरत्वादासुरी त्रिष्टुप् । यजुः पङ्क्तिर्वा स्फ्यादाने विनियो-गः, इन्द्रस्य प्राजापत्या जगती पार्थी पशुष्ट्वा जपे विनियोगः ॥

पृथिवि देवि : (१)

पृथिवि देवयजनीत्यस्य वेदिर्देवता साम्नी बृहती ऋग्गायत्री वा । अन्योपदध्याद्यस्य षण्व्यूहेनाष्टादशाक्षरत्वात् । खनने विनियोगः ।

व्रजम् पुरीषम् ।

व्रजङ्गच्छेत्यस्य पुरीषन्देवता । दैवी जगती यजुरुष्णिग्वा । सप्ता-क्षरत्वात् । पुरीषादाने विनियोगः ॥

वर्षतु वेदिः ।

वर्षतु ते इत्यस्य वेदिर्देवता । दैवी पङ्क्तिः पञ्चाक्षरत्वात् । वेदि-प्रोक्षणे विनियोगः ॥

बधान सावित्रम् ।

बधान देव सवितरित्येतद्यजुः सावित्रम् । सवितास्य देवता द्रष्टा वा, ऋग्जगती वा । ब्राह्मी गायत्री वा । योऽस्मानित्यस्यैकादशपू-र्वैकव्यूहेन षट्त्रिंशदक्षरपूरणात् । (२) पुरीषप्रक्षेपे विनि-योगः ॥

अपारुमररोऽप्यासुरे ।

अपारुम् । अररो दिवमिति द्वे यजुषी आसुरे अनयोररुरो देवता । अतऽदकालभ्य, अपारुम् आसुरीगायत्री पञ्चदशाक्षर

(१) पृथिव्यै पृथिवि वेदिरिति काशीसंस्कृतसर्वानुक्रमपाठः । पृथिव्यै वर्मासीत्यस्य परमेष्ठी ऋषिस्तृणम् देवता दैवी त्रिष्टुप्तृणाधारे विनियोगः ॥ पृथिव्यै व-र्मोऽसि पृथिवि देवयजनि ।

(२) पुरीषप्रक्षेपे इत 'क' पुस्तकपाठः ॥

त्वात्, अरदी प्राजापत्या गायत्री यजुरनुष्टुब्वा । अष्टाक्षरत्वात् । प्रथमस्य प्रहरणे (१) विनियोगः । द्वितीयस्योत्कराभिन्यासे विनियोग ॥

द्रप्सँस्ते वेदिः

द्रप्सस्ते द्यामित्यस्य वेदिर्देवता । दैवी त्रीष्टुप् यजुर्गायत्री वा षडक्षरत्वात् तृतीयप्रहरणे विनियोगः ॥

गायत्रेण त्रीणि त्रैष्टुभानि ।

गायत्रेण त्वा, त्रैष्टुभेन त्वा, जागतेन त्वेत्येतानि त्रीणि यजूंषि त्रैष्टुभानि विष्णुदेवतानि पूर्वपरिग्रहे विनियुक्तानि । त्रयाणामपि त्रयोदशाक्षरत्वादासुर्यनुष्टुप्छन्दः ॥

सुक्ष्मा त्रयाणाम् वेदिः

सुक्ष्मा चासि । शिवा चासि । ऊर्जस्वती चेत्येषाम् त्रयाणाम् वेदिर्देवता । उत्तरपरिग्रहे विनियोग । सुक्ष्मा प्राजापत्यागायत्री यजुरनुष्टुब्वा अष्टाक्षरत्वात् शिवा नवाक्षरत्वादासुरीजगती यजुर्बृहती वा । ऊर्जस्वती एकादशाक्षरत्वात् । यजुस्त्रिष्टुप् आसुरी पङ्क्तिर्वा ॥

पुराऽग्नस्तं० सोऽपश्यच्चान्द्रमसीं त्रिष्टुभम् ।

पुराक्रूरस्येत्येतामृचम् चान्द्रमसम् चन्द्रमो देवताम् त्रिष्टुप्छन्दस्काम्, अथर्वसंज्ञकऋषिरपश्यत् । दृष्टवान् । अनुमार्जने - चास्य विनियोगः, यस्या एकादशाक्षरचत्वारः पादाः सा चतुश्चत्वारिंशदक्षरा त्रिष्टुप्छन्दोभाषते, अथास्याः पादो द्वादशाक्षरस्तेनैकाक्षराधिकाः ॥

प्रोक्षणीः प्रैषः ।

प्रोक्षणीरासादयेत्ययम् प्रैषः । तस्य सम्बोधत्वात् । एवम् स-

(१) प्रहारे इति 'स, पुस्तकपाठस्त ॥

वर्मैषाणाम् प्रैयम् । यजुरन्त्याऽदैवी जगती वा छन्दः समासत्वा-त् । अयोऽग्नेयणे विनियोगः ॥

## द्विषतऽआभिचारिकम् ।

द्विषतो वधोऽसीत्येतद्यजुराभिचारिकम् । अभिचारसाधकमित्यर्थः । लिङ्गादस्य रक्षो देवता । कर्मणा शत्रोः पीडनमभिचारः सप्रयोजनमस्य तदाभिचारिकम् । "प्रयोजनमि"ति ठक् । यदा चाभिचारबुद्ध्या द्विषतहत्यस्य स्थाने अमुकस्य इत्युच्यते तदा तस्योच्चारणानन्तरमुद्वासनार्थः कर्तव्यो, न परथा । इयम् दैवीत्रिष्टुप् यजुर्गायत्री वा । षडक्षरत्वात् । स्फ्यस्योत्करे प्रक्षेपे विनियोगः ॥ (१)

## अनिशित स्रुवः ॥

अनिशितोऽसीत्यस्य स्रुवो देवता स्रुवसम्मार्जने विनियोगः । प्राजापत्या बृहती साम्नपङ्क्तिर्वा विंशत्यक्षरत्वात् ॥

## अनिशिताः स्रुचः ।

अनिशिताऽसीत्यस्य स्रुग्देवता प्राजापत्या बृहती साम्नपङ्क्तिर्वा विंशत्यक्षरत्वात स्रुक्संमार्जने विनियोगः ।

## अदित्यै विष्णोर्योक्त्रम् ।

अदित्यै रास्ना, विष्णोर्वेष्पइत्यनयोर्योक्त्रम् देवता, अदित्यै दैवीत्रिष्टुप् यजुर्गायत्री वा षडक्षरत्वात् । योक्त्रपरिहरणे विनियोगः । विष्णो. । दैवीपङ्क्तिः । पञ्चाक्षरत्वात् । आज्यग्रहणे विनियोगः ।

## ऊर्जे त्वयाणामाज्यम्

ऊर्जे त्वा, अदब्धेन, त्वा स:वतुस्त्वा, इत्येतेषाम् त्रयाणाम् यजुषामाज्यम् देवता । ऊर्जे त्वा दैव्यनुष्टुप् । अष्टाक्षरत्वात् आज्यासादने-

(१) अस्य पुरः निष्टप्तमरातयपोः परमेष्ठी देवता रक्षो देवता साम्नगायत्री छन्दः प्रतापे विनियोगः ॥ इति पद्धत्या पाठः ॥

विनियोग:, महर्ष्येनेति एकाक्षराधिकाक्षक त्रिष्टुप्‌पाय वा षैमसंयोगैकाक्षरीभावव्यूहेन षट्‌त्रिंशदक्षरा ब्राह्मी गायत्री वा जगती वा आर्षी बृहती वा । आज्यावेक्षणे विनियोगः ॥

सवितुराषम् ।

सवितुर्वस्त्येतद्यजुराषम् । अस्यापो देवता इत्यर्थं । छन्दस्तु प्राजापत्यादिपूर्वोक्तम् चतुर्विंशत्यक्षरत्वात् । (१) प्रोक्षणोत्पवने विनियोग ॥

तेजोऽसि धामाज्यम् ॥५॥(२)

तेजोऽसि, धाम नामासीत्येतयोराज्यम् देवता । तेजोऽसि यजुस्त्रिष्टुबासुरी पङ्‌क्तिर्वा । एकादशाक्षरत्वात् । आज्यावेक्षणे विनियोग । धाम नाम एकविंशत्यक्षरा ऋगुष्णिक् आज्यग्रहणे विनियोग ॥

कृष्णोऽसीध्मः ।

कृष्णोऽसीत्यस्येध्मो देवता चतुर्दशाक्षरा आसुर्युष्णिक्साम्नी वा । इध्मप्रोक्षणे विनियोग ॥

वेदिर्बर्हिर्लिङ्गोक्ते ।

---

(१) आज्योत्पवने इति पद्धतिपाठ । सवितुरित्यापो दे० प्राजा प० प्रो० ॥

(२) अत्र काण्वीयसर्वानुक्रमे यस्ते प्राणस्य त्रिष्टुप् प्रथमाकण्डिका ॥ यस्ते प्राण पशुषु प्रविष्टो देवानां विष्टामनुयो वितस्थे ॥ आत्मन्वान्त्सोम घृतवान् हि भूत्वाऽत्र गं-च्छ स्वर्यजमानाय विन्द ॥ इति शुक्लयजु काण्वशाखीयसंहितायां दशानुवाके पञ्चाशत्कण्डिका ॥ यथा माध्यन्दिन्या शाखाया संहिताया अनुवाकसूत्रमात्र मुद्रित, परन्तु काण्वशाखीयसंहिताया अनुवाकमसूत्राणि सर्वाध्यायशेषे क्रियन्ते । इषे त्वा तिस्रो वीरोसि मनसोऽप्रेतपनऽग्ने पवित्रे स्थ वसतत्र शर्मासि सप्त घृताचीरसि चतस्र शर्मासि पुरः पञ्च देवस्य त्वा चतस्रा देवस्य त्वा पुरा षट् प्रत्युष्टं० र स पञ्च प्रथम, दश, पञ्चाशत् ॥१।१०।५०॥ इत्यनुवाक ॥

वेदिरसीत्यस्य वेदिर्देवता । बर्हिरसीत्यस्य बर्हिर्देवता' लिङ्गोक्तो' वेदिरसि चर्योदशाक्षरा भासुर्यनुष्टुप्वेदिर्मार्जने विनियुक्ता । बर्हिरसि बर्हिर्मोक्षणे विनियोगः ॥

अदित्यास्नापम् ।

अदित्यै व्युन्दनमसीत्येतद्यजुरापम् । आपोऽस्य देवताः । अष्टाक्षरा यजुरनुष्टुप्प्राजापत्या गायत्री वा मूलोपसेचने विनियोगः ॥

विष्णोः प्रास्तरम् ।

विष्णोः स्तूपोऽसीत्येतत्प्रास्तरम् । प्रस्तरदेवतम् । प्रस्तरग्रहणे विनियुक्तम् । पञ्चाक्षरा दैवी पङ्क्तिः ॥

ऊर्णम्रदसं वेदिः ।

ऊर्णम्रदसमित्येतस्य वेदिर्देवता । पञ्चदशाक्षरा आसुरी गायत्री वेदिस्तरणे विनियोग. ॥

भुवपतये त्रीण्याग्नेयानि । (१)

भुवपतये स्वाहेत्यादीनि त्रीणि यजूंष्याग्नेयानि । एषामग्निर्देवता । आद्यस्य दैवीजगती यजुरुष्णिग्वा सप्ताक्षरत्वात् । अन्त्ययोरष्टाक्षरा यजुरनुष्टुप् । प्राजापत्या गायत्री वा स्रुगभिमर्शने सर्वेषां विनियोगः ॥

गन्धर्वस्त्वयाणाम् परिधयः

गन्धर्वस्त्वा । इन्द्रस्य बाहुर्मित्रावरुणौ त्वेति त्रयाणाम् यजुषाम् परिधयो देवता । आद्या सवर्णदीर्घयथादेशव्यूहने पङ्क्तिर्नवदशाक्षरा न्नगजगती ब्राह्मी गायत्री वा । द्वितीया यणादेशव्यूहने द्वाचत्वारिंशदक्षरा ब्राह्मी उष्णिक् । त्रयाणाम् परिधिपरिधाने विनियो

(१) भुवपतये इति काण्वपाठः ॥

गः ॥

### वीतिहोत्रम् विश्वावसुराग्नेयीं गायत्रीम् ।

वीतिहोत्रम् त्वेत्येतामृचमाग्नेयीमग्निदेवताम् गायत्रीछन्दस्काम् विश्वावसुऋषिरपश्यत् । यस्याष्टाक्षरास्त्रयः पादाः सा चतुर्विंशत्यक्षरा गायत्री छन्दो नोच्यते । अत्र प्रथमपादे त्वाशब्दे तु वा इति व्यूहेनाष्टाक्षरपूरणम् । समिदाधाने विनियोगः ॥

### समिदस्याग्नेयम् ।

समिदसीत्येतद्यजुराग्नेयम् । अग्निरस्य देवता । चतुरक्षरा दैवीबृहती समिदाधाने विनियोगः ॥

### सूर्यस्त्वा लिङ्गोक्तम् ।

सूर्यस्त्वेत्येतल्लिङ्गोक्तम् दैवतम् । आहवनीयाग्निदैवतमित्यर्थः । पञ्चदशाक्षरासुरी गायत्री आहवनीयप्रोक्षणाध्वर्योर्जपे विनियोगः ॥

### सवितुर्विधृती ।

सवितुर्बाहूभ्यामित्यस्य विधृतिर्देवता । यजुर्गायत्री । विधृत्योस्तरणे विनियोगः ॥

### ऊर्णम्रदसमाद्या प्रस्तरे

ऊर्णम्रदसं । आद्या यजुरस्येति प्रस्तरे प्रस्तरदेवतं ऊर्णम्रदसम् पञ्चदशाक्षरा आसुरी गायत्री । प्रस्तरस्तरणे विनियोगः । आ त्वा त्रयोदशाक्षरा आसुर्यनुष्टुप् । प्रस्तराभ्याधाने विनियोगः ॥

### घृताच्यसि त्रयाणाम् जुहूपभृद्ध्रुवाः क्रमेण ।

घृताच्यसि जुहूरित्यादित्रयाणाम् यजुषां क्रमेण जुहूपभृद्ध्रुवा देवता । घृताच्यसि जुहूरित्यस्य जुहूर्देवता जुह्वासादने विनियोगः । घृताच्यस्युपभृदित्यस्योपभृद्देवता उपभृदासादने विनियो-

गः। ध्रुवा नामेत्यस्य ध्रुवादेवता ध्रुवासादने विनियोगः। तिस्रोपि द्वाविंशत्यक्षराः सामत्रिष्टुप्।

प्रियेण हविः।

प्रियेण धाम्नेत्यस्य हविर्देवता। द्वादशाक्षरा सामगायत्री यजुर्जगती वा याजुषी बृहती वा। प्राजापत्यार्च्यग्वा। आधपुरोडाशाद्यासादने विनियोगः॥

ध्रुवाऽअसदन्—न्याद्दि मांविष्णवे।

इमे द्वे यजुषी विष्णुदेवते पञ्चविंशत्यक्षरत्वादेकाक्षराधिका प्राजापत्या पङ्क्तिर्वा सामजगती वा। ऋचामनुष्टुब्वा। सर्वहविरालभने विनियोगः। पाहि मां षडक्षरादैवी त्रिष्टुप्। यजुर्गायत्री वा आत्मालम्भे विनियोगः॥

अग्ने वाजजिदाग्नेयम्।

अग्ने त्वा वाजजिदित्येतदग्निदैवतम्। एकोनविंशत्यक्षरत्वादेकाक्षराधिका सामबृहती। ऋग्गायत्री वा। अग्निसंमार्गे विनियोगः।

नमो दैवम्।

नमो देवेभ्य इत्येतद्यजुर्दैवम्, देवा देवता अस्येत्यर्थः। षडक्षरा दैवीपङ्क्तिः। अञ्जलिकरणे विनियोगः॥

स्वधा पित्र्यम्।

स्वधा पितृभ्य इत्यस्य पितरो देवताः पञ्चाक्षरा दैवीपंक्तिः अञ्जलिकरणे विनियोगः। पितृत्वादुदकस्पर्शः

सुयमे स्रुचौ।

सुयमे मे इत्यस्य स्रुचौ देवता एकविंशत्यक्षरा पदशुण्यिक्। स्रुचीरादाने विनियोगः॥

## अङ्घ्रिणा वैष्णवम् ।

अङ्घ्रिणा विष्णविर्येतद्यजुर्वैष्णवम् । विष्णुरस्य देवता । एकादशाक्षरा याजुषी त्रिष्टुब्वा । आसुरीपङ्क्तिर्वा दक्षिणातिक्रमणे विनियोगः ॥

## वसुमतीमाग्नेयम्

वसुमतीत्येतदग्निदैवतम् । एकोनविंशत्यक्षरत्वादेकाक्षराधिका साम्नीबृहती । साम्नीगायत्री वा । होमार्थे (१) मरस्थाने विनियोगः ॥

## हूतऽऐन्द्रम् ।

हूतऽइन्द्र इत्येतद्यजुरैन्द्रदैवतम् । एकाक्षराधिका शक्वरीछन्दः । सप्तपञ्चाशदक्षरत्वात् उत्तरावाराद्धोमे विनियोगः ॥

## संज्योतिषाऽऽज्यम् । (२)

अस्याज्यम् देवताः षडक्षरा दैवीत्रिष्टुप् यजुर्गायत्री वा । ध्रुवासमञ्जने विनियोगः ॥

## मयीदमाशीःप्रतिग्रहणम् ।

मयीदमित्येतद्यजुराशीः प्रतिग्रहणम् आयासनमाशीः. यजमानस्य वस्तुनः प्रतीक्षा आशी प्रतिगृह्यते प्रार्थ्यते येन ता आशी प्रतिग्रहणम् । लिङ्गोक्तो मघवा देवता अथवाऽऽशी प्रतिग्रहणे देवता जपे वा रूपकथनस्याप्रस्तुतत्वात् । सवर्णदीर्घयणादेशयोरन्यतरव्यूहेन षड्विंशदक्षरा । ब्राह्मीगायत्री ऋग्जगती वा

## उपहूता द्यावापृथिव्यम् ।

---

(१) मरस्थाने इति भाष्यपाठः ।

(२) अबाभीमदन्त पितरो इति कात्यायनसर्वानुक्रमपाठः ॥ एतस्मात् उपहूता तस्मात् मयीदमाशीःतस्मात् अग्ने वाजजिदित्यस्मात् व्युत्क्रमेण पाठः ॥

एतत्षड्त्येतद्यजुर्वैश्वदेवम् विश्वे देवास्य देवतेत्यर्थः । सप्तोत्तरिष्ट-मित्यत्र यथा व्यूहेन चतुरशीत्यक्षरा प्रकृतिमसवे विनियोगः ॥

## एषा तेऽनुष्टुबाग्नेयी । (१)

एषा तइत्येषा, ऋगनुष्टुप्युक्ता । आग्नेयी अग्निरस्या देवतेत्यर्थः । समिदनुमन्त्रणे विनियोगः, अस्याअष्टाक्षराश्चत्वारः पादाः सा द्वात्रिंशदक्षराऽनुष्टुबित्युच्यते । अत्र तु प्रथमः । पादसप्तकः । द्वितीये दशकः, ततोऽष्टकः, ततः सप्तकइति । इयमानुष्टुप्पादानामनियताक्षरत्वात् ॥

## अग्ने वाजजिदाग्नेयम् । (२)

अग्ने व्वाजजिदित्येतदाग्नेयम् । अग्निदैवतम् । एकाक्षराधिका जगती वा साम्नी बृहती वा पञ्चत्रिंशदक्षरत्वात् । अग्निसम्मार्जने विनियुक्तम् ॥

## अग्नीषोमयोश्चत्वारि लिङ्गोक्तानि ।

अग्नीषोमयोरुज्जितिम् । अग्नीषोमौ तमप । इन्द्राग्न्योरुज्जितिम् । इन्द्राग्नीतमपेत्येतानि चत्वारि यजूंषि लिङ्गोक्तानि । पूर्वयोर्द्वयोरग्नीषोमौ देवता । उत्तरयोर्द्वयोरिन्द्राग्निदेवतेत्यर्थः । प्रथमस्य एकादेशव्यूहेन चतुर्विंशत्यक्षरत्वात् । आर्षी गायत्री द्वितीयस्यैकादशव्यूहेन द्वात्रिंशदक्षरत्वात्प्राजापत्या जगती । तृतीयस्य अनुष्टुप् । एकविंशत्यक्षरत्वात् । चतुर्थस्य त्रिंशदक्षरत्वादार्षी पंक्तिश्छन्दः प्रथमतृतीययोर्जुह्वाव्यूहने विनियोगः, द्वितीयचतुर्थयोरुपभृद्व्यूहने ॥

## वसुभ्यस्त्रयाणाम् परिधयः ।

वसुभ्यस्त्वा, रुद्रेभ्य, आदित्येभ्यइत्येतेषाम् त्रयाणाम् परिधयो दे-

---

(१) एतस्याने एतन्ते वैश्वदेवानीति व्युत्क्रमेण पाठोऽभ्य. ॥

(२) एतस्याने परसूत्रमत्रास्ति तस्पूर्वमुक्तम् ॥

यताः परिध्यञ्जने विनियोगः ॥

**सञ्ज्ञानाथाम् व्यन्तु प्रास्तरे ।**

सञ्ज्ञानाथाम् व्यन्तु यथोक्तमित्येते द्वे यजुषी प्रास्तरे । प्रस्तरदैवते । प्रस्तारादाने प्रस्तराञ्जने च यथाक्रमं विनियुक्ते पाठस्य व्यूहेन विंशत्यक्षरत्वात् प्राजापत्या बृहती साम्पंक्तिर्वा । द्वितीयस्याष्टाक्षरत्वाद्यजुरनुष्टुप् ।

**मरुतां कपिर्बृहतीं प्रास्तरीं । (१)**

मरुतां पृषतीरित्येतामृचम् कपिरपश्यत् । कीदृशीं बृहतीं बृहतीछन्दस्काम् । पुनः कीदृशीं प्रास्तरीं प्रस्तरदेवताम् । नीचैर्हरणेऽस्या विनियोगः, इयमेकाधिकाक्षरा बृहती ; पादानामनियताक्षरत्वात् ।

**चक्षुष्पाऽग्नेयम् ।**

**अन्त्यः पादश्चाग्नेयः (२)**

चक्षुष्पा इत्ययम् पादः, आग्नेयोऽग्निदेवत आज्यालम्भे विनियुक्तः ।

**यं परिधिं (३) देवलऽआग्नेयीं, त्रिष्टुभम् विराड्रूपां यजुरन्ताम् ।**

यं परिधिमित्येतामृचम् यजुरन्ताम् देवलऋषिरपश्यत् । आग्नेयीमग्निदेवताम् । विराड्रूपाम् । त्रिष्टुभम् । एकादशिनस्त्रयोऽष्टकश्च विराड्रूपेति, विराड्रूपालक्षणम् । तेन यस्या एकादशाक्षरास्त्रयः

---

(१) बृहतीमित्यत्र बार्हतमिति कात्यायनपाठः प्रास्तरीमित्यपि प्रास्तरामिति पाठश्च ॥

(२) इदं सूत्रशकलं कात्यायनीयसर्वानुक्रमे नास्ति ॥

(३) देवलमाग्नेयीमित्येव तत्र पाठः । एतत्सूत्रार्थेकादशाक्षराणि न सन्ति कात्यायनशाखायामिति ॥

## निति पञ्चार्षेयो यज्ञो देवता ।

यद्य नमय तद्दत्येष मन्त्र. । पञ्चार्षेयः पञ्चार्षेयाणि ऋषयो य स्यासौ पञ्चार्षेयः । के ते पञ्चऋषय इत्यत आह । सूर्यं, यजमान् । ऋषिः । हव्यवान् । धामान्तवानित्येते । एतस्य मन्त्रस्य यज्ञो देवता वेदामाहात्म्ये विनियोगोऽस्य पञ्चविंशत्यक्षरत्वादेकाधिका आर्षी गायत्री ॥ साम्नजगती वा ॥

## अग्ने दृष्यायो गार्हपत्यः ।

अग्ने दृष्यायोऽग्नेऽसमित्यस्य गार्हपत्योऽग्निर्देवता । पञ्चचत्वारिंशदक्षरत्वादेकाधिका आर्षी त्रिष्टुप् । संस्रवहोमे विनियोगः ॥

## अग्नये दक्षिणाग्निः ।

अग्नये सवेशपतयइत्यस्य दक्षिणाग्निर्देवता । आसुरीपङ्क्तिः याजुषी त्रिष्टुब्वा । एकादशाक्षरा दक्षिणाग्निहोमे विनियोगः ॥

## सरस्वत्यै लिङ्गोक्तम् ।

सरस्वत्याइत्येतल्लिङ्गोक्तम् । लिङ्गेनोक्तदैवतमित्यर्थः । दक्षिणाग्निहोमे विनियुक्तः । छन्दःपूर्वसूक्तम् ॥

---

(१) उलूखल इविरात्यायनौ ध्रैवान्धमिति काशाशानी सर्वानुक्रमेऽधिक पाठ ॥ उलूखले मुसले इति परमेष्ठी ऋषिर्विश्वेदेवा देवता त्रिष्टुप्छन्द आशिरवनहोमे विनियोग । उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले ॥१॥ अवप्रुषो विपृच स जुहोमि सत्या. सन्तु यजमानस्य कामा स्वाहा ॥ आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ॥ सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञेऽस्मिन् ॥ ३ ॥

विष्णुक्रमणे चैषाम् विनियोगः॥

अस्माद्भागः। (१)

अस्मादन्नादित्यस्य भागो देवता व्यूहेनाष्टादशाक्षरत्वात्। सानुपदस्य त्र्यगायत्री सामबृहती छन्दो भागावेक्षणे विनियोगः॥

अस्यै भूमिः।

अस्यै प्रतिष्ठाया इत्यस्य भूमिर्देवता, व्यूहने विंशत्यक्षरत्वात्। सामपङ्क्तिः प्राजापत्या बृहती वा। भूम्यवेक्षणे विनियोगः॥

अगन्म दैवम्।

अगन्म स्वरित्येतद्यजुर्देवो देवाश्चास्य देवता। दैवी बृहती, चतुरक्षरत्वात्। प्राचीक्षणे विनियोगः॥

संज्योतिषाऽऽहवनीयः।

संज्योतिषेत्यस्याहवनीयो देवता। यजुर्गायत्री दैवीत्रिष्टुब्वा। षडक्षरत्वात् आहवनीयेक्षणे विनियोगः॥

स्वयम्भूः सूर्यस्य (२) सौरे।

स्वयम्भूरसि सूर्यस्याहतमित्येते द्वे यजुषी सौरे सूर्यदेवते। यथाक्रमं सूर्यावेक्षणे प्रदक्षिणावर्तने वा विनियुक्ते, स्वयम्भूः एकोनविंशत्यक्षरत्वात् एकाधिका त्र्यगायत्री वा एकोना सामपङ्क्तिर्वा सूर्यस्येति नवाक्षरत्वाद्यजुर्बृहती आसुरी जगती वा॥

अग्ने गृहपते गार्हपत्यः

अग्ने गृहपते सुगृहपतिरित्यस्य गार्हपत्यो देवता। चतुःपञ्चाशदक्षरा ब्राह्मी बृहती गार्हपत्योपस्थाने विनियोगः॥

---

(१) अस्माद्न्नाद्॰ ऽस्यै भूमिरगन्म स्वर्देवो॰ इति क्व चित् पाठान्तरं चैत्य.॥

(२) द्वे इत्यधिक- पाठ.॥

अग्नये कव्यवाहनाय, सोमाय पितृमते द्वे यजुषी दैवे । दैवदेवत्ये । कस्मात् स्वाहाकारश्रुतेः । अनयोर्यजुषोरन्ते स्वाहाकारश्रवणात् । स्वाहाकारश्च देवे एव हविः प्रदानार्थत्वात्, वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नम् प्रदीयते श्रुतेः । अनयोर्होमे विनियोगः । अग्नये । एकादशाक्षरत्वात् यजुस्त्रिष्टुप्आसुरीपङ्क्तिर्वा, सोमाय नवाक्षरा यजुर्बृहती आसुरी जगती वा ।

अपहता असुरा ।

अपहता इत्येतदासुरम् असुरदैवतम् । उल्मुके विनियुक्तम् । आसुरत्वादव्यवधारणानन्तरमपां स्पर्शः कार्यः, चतुर्दशाक्षरा साम्नी त्रिष्टुप् आसुरी त्रिष्टुब्वा ।

ये रूपाणि कव्यवाहनोऽग्निस्त्रिष्टुप् ।

ये रूपाणीत्यस्या ऋचः कव्यवाहनो देवता त्रिष्टुप्छन्दः अत्र चतुर्थस्य व्यूहेन पूरणम्, प्रथमो द्व्यक्षरएव । तस्याः प्रजापतिरृषिः उल्मुकनिधाने विनियोगः ॥

अत्रामीमदन्त पितृये ।

अत्र पितरः, अमीमदन्त, पितरस्त्येते द्वे यजुषी पित्र्ये । अनयोः पितरो देवता इत्यर्थः । द्वयोरप्यष्टादशाक्षरत्वात् साम्न्यनुष्टुभौ त्रगायत्र्यौ वा जपे विनियोगः । अनयोरुच्चारणानन्तरमपां स्पर्शः कार्यः ।

नमो वः षट्लिङ्गोक्तानि ।

नमो वः पितर इत्यादीनि यजूंषि लिङ्गोक्तानि एषाम् स्वगतलिङ्गेनैव देवतोक्ताः । तत्र परे पित्र्ये इति । परयोः पित्र्यत्वस्य पृथगुक्तत्वादिमानि पित्र्याणि न भवन्तीति प्रतीयते, न रसशोषजीवस्वधाघोरमन्युदेवतामीत्यर्थः । आद्यानाम् षण्णाम् नवाक्षराणां यजुर्बृहती आसुरी जगती वा । षष्ठस्य एवम् विंशत्यक्षरा त्रगु-

पिण्ड्‌ यज्ञलिकरणे एषाम्‌ विनियोगः । परे पित्र्ये ॥ अत्राम्‌ ,पि: तर,एतत, इत्येते द्वे द्वे यजुषी पितृदेवत्ये अत्राम षोडशाक्षरा प्राजापत्यानुष्टुप्‌ । एतदष्टाक्षरा यजुरनुष्टुप्‌ । प्रजापतिगायत्री वा अपि सूत्रोपाचमने च कर्मेण विनियुक्ते । (१)

आधत्त पितरः गायत्री ।

आधत्त पितरस्तीयस्य पित्र्या पितृदेवत्या गायत्रीछन्दस्का । अत्र तृतीयस्य व्यूहेन पूरणम्‌ । पुत्रकामाया. पत्न्या मध्यमपिण्डप्राशनेऽस्या विनियोग ॥

ऊर्जमापो विराट्‌ ।

ऊर्जं वहन्तीरितीयमृक आपी अब्देवत्या अस्या आपो देवता विराट्छन्द । दशकास्त्रयो विराडिति विराडनुष्टुभा । द्वितीयो नवकैकेन न्यूना । इति पितृयज्ञमन्त्राणामार्ष्यादिकसूक्तम्‌ । (२) अथान्याधेयमन्त्राणाम्‌ साधारणमृषिमाह ॥ १ ॥

अग्न्याधेयम्‌ प्रजापतेरार्षम्‌ ।

अथान्याधेयमृषिन तन्मन्त्रा सचालते । अग्न्याधेयमन्त्राणाम्‌ सर्वेषाम्‌ सामान्येन प्रजापतिऋषिरित्यर्थ अत्र तु ऋषिविशेषोऽभिधीयते तयोभावपि ऋषी भवतः अत्रैव विकल्पं नैतान्त्र्यीमाह ॥

देवानामग्नेर्गन्धर्वाणाम्‌ वा ।

देवानामग्ने गन्धर्वाणाम्‌ वा । अग्न्याधेयमार्षमित्यनुवर्तते अग्न्याधेयमन्त्राणाम्‌ देवा ऋषय अग्निर्वा ऋषिः । गन्धर्वा वा ऋषयः

---

(१) कण्वशाखायोऽनुष्टुप्‌ तथैवमेव पाठ० ॥ एतदम परे पित्रो, एतत्सुदराय "उदायुषामृतदेवस्यम्‌,, ॥

(२) कृणोऽसि यज्ञा वाजसनेय देवसवितरेकादशाणां मयो भद्रो दृष्टा योऽग्निः वैश्वर्चसा दसाद्ये कश्यपादृतादृग्न्या एव तृतीयं सर्वर्द्धिरिन्दुनाकसूत्र कात्यायनशाखीयाः स्वीयम्‌ ॥

प्रजापतिर्वा पूर्वसूत्रोक्तइति सर्वमन्त्रेषु चत्वारो विकल्पा: ॥

समिधाग्नेय्यश्चतस्रो गायत्र्य: ।

समिधाग्निं सुसमिद्धाय । तन्त्वा । उपत्वाग्ने एताश्चतस्र ऋच आग्नेय्यो अग्निदेवता: । गायत्रीछन्दस्का: ।

समिधा विरूपाङ्गिरस: ।

समिधाग्निमित्यस्या अङ्गिरस: पुत्रो विरूपसञ्ज्ञकऋषि: समिदाधाने विनियोग: ॥

सुसमिद्धाय वसुश्रुत: ।

सुसमिद्धाय शोचिषइत्यस्या वसुश्रुतऋषि । अध्वर्योर्जपे विनियोग: ॥

तन्त्वा भरद्वाज: ।

तन्त्वा समिद्भिरित्यस्या भरद्वाजऋषि: समिदाधाने विनियोग: अथ तृतीये व्यूह. । उपत्वेत्यस्य पूर्वोक्तएवऋषय: ॥

भूर्भुव: स्वरिति महाव्याहृतयोऽग्निवायुसूर्या देवता: क्रमेण ।

भूरित्यस्याग्निर्देवता । भुवरित्यस्या वायु स्वरित्यस्या: सूर्यइति । भूरिति दैवी गायत्री आसां तिसृणामप्यग्निस्थापने विनियोग: ॥

द्यौरिव यजमानाशीर्लिङ्गोक्तदेवता

द्यौरिव भूम्नेतीयं यजमानस्याशीर्लिङ्गोक्तदेवता । पृथिवी च व्या देवतेति यावत् । व्यूहेन षट्त्रिंशदक्षरा षट्जगती ब्राह्मी गायत्री वा आर्षी बृहती वा यजमानकर्तृके जपे विनियोग: ॥

आयङ्गौ: सार्पराज्ञसृषो गायत्रोऽग्नि: परापररूपेण देवता ।

भम्।

अयम् ते योनि रितीमामृचम् अग्निदेवत्याम्। अनुष्टुप्छन्दस्काम् भारती भरतस्य पुत्रौ। देवश्रवा देववातश्चेतो द्वौ ऋषी द्रष्टारौ अपश्यताम्। पादस्त्रौ व्यूहेन छन्दःपूरणीयम्॥

## अयमिह वामदेवो जगतीम्॥

अयमिह प्रथमइति इमामृचम् जगतीछन्दस्काम् वामदेव ऋषिरपश्यत्। आग्नेयीमित्यनुवर्त्तते तेनास्या अग्निर्देवता: अस्या द्वाष्टाचत्वारिंशदक्षरा जगत्युच्यते। "अष्टाचत्वारिंशदक्षरा जगतीति श्रुतेः", अत्र तु आद्यो द्वादशकः। द्वितीयो व्यूहेनैकादशकः। तृतीयो द्वादशकः एकोना॥

## अस्य प्रत्नामत्सारो गव्यां (१) वाऽऽग्नेयीं वा पयो देवत्याम् वा गायत्रीम्।

अस्य प्रत्नामनुद्युतमित्येतामृचम् गव्याम् आग्नेयीं वा पयोदेवत्याम् वा गायत्रीछन्दस्काम् वत्सारऋषिरपश्यत्। अस्या गौर्देवता। अग्निर्वा पयोवेति त्रयो देवा विकल्प्याः॥

## तनूपाऽआग्नेयानि।

तनूपाऽअग्नेऽसीत्यादीनि चत्वारि यजूंषि आग्नेयानि अग्निदेवत्यानि, तनूपा, वर्चोदा, इति द्वे एकादशाक्षरे यजुस्त्रिष्टुभौ। असुराख्यौ वा। आयुर्दाऽसि दशाक्षरा यजुःपङ्क्तिरासुरी त्रिष्टुब्वा। अग्ने यन्मे तद्दशाक्षरा आसुर्यनुष्टुप्॥

## इन्धानाऽआग्नेयी महापङ्क्तिस्त्वयसानाः॥(२)

(१) वत्सार इति, आवत्सार इति "अव,, यो पुस्तकयो पाठ इति, वत्सार इति कात्यायनानुमतपाठस्य बोध्य॥

(२) तत्र महापङ्क्तिरिति बोध्य॥

इध्मानाग्ने शतमित्यृक् आग्नेयी अग्निदेवत्या महापङ्क्तिश्छ-न्दस्का त्र्यवसाना विरामोऽवसानम्। त्र्यवसानानि विरामस्था-नानि यस्याम् सा त्र्यवसाना ताम् तस्या अष्टाक्षरा षट्पादा सा म-हापङ्क्ति षडष्टका वा महापङ्क्तिरित्युक्तत्वात् अत्र अष्टसप्ताक्षर-स्तो नैकोना ॥ १२ ॥

## चित्रावसो रात्रिदेवत्यस्तपयोऽपश्यत्।

चित्रावसो स्वस्तीत्येतद्रात्रिदेवत्यम् यजुस्तपयोऽपश्यत्। "एतेन ह्यस्य वा अत्पयी रात्रीं स्वस्ति पारं० समश्नुत„ इति श्रुतेः। (१) द्वादशाक्षरा यजुर्जगती साम्नीगायत्री वा आसुरी बृहती वा प्राजा-पत्या चाप्यत्र। उपप्रयन्त इत्यत आरभ्य चित्रावसो स्वस्ति इत्यन्तस्य मन्त्रगणस्याहवनीयोपस्थाने विनियोग ॥

## सन्त्वमाग्नेयम् ॥

संत्वमग्न इत्येतद्यजुरग्निदेवतम्। अष्टाचत्वारिंशदक्षरा आ-र्षीजगती ब्राह्मी अनुष्टुब्वा आहवनीयस्याग्रे उपविश्य जपे विनि-युक्तम् ॥

## अन्धस्थ रेवती. संहितेति त्रीणि गव्यानि।

त्रयाणाम् गोदेवतेत्यर्थः। अन्धस्थ एकाधिका ब्राह्मी गायत्री सप्त-विंशत्यक्षरत्वात्। रेवती अष्टाविंशत्यक्षरा प्राजापत्या त्रिष्टुबार्ची उष्णिग्वा। संहितासि विश्वरूपीत्यष्टादशाक्षरा आर्ची गायत्री साम्नी बृहती वा। आयायाम् प्रति गमने विनियोग। संहितेत्यस्य गोरभिमर्शने ॥

## उपत्वाग्नेयन् त्र्यृचम् गायत्रम् मधुच्छन्दा वैश्वामित्र.।

---

(१) अत्र श्रुति [illegible] ॥

(२) रेवती [illegible] ॥

[illegible] ॥

उपत्वाग्ने दिवे। राजन्तम्। स नः पितेवेत्येतत्तृचम् ऋचा प्रथमम् आग्नेयमग्निदेवतम् विश्वामित्रस्य पुत्रो मधुच्छन्दा इत्येव सञ्ज्ञ ऋषिरपश्यत् दृष्टवान्। राजन्तमित्यस्याः प्रथमद्वितीयौ सप्ताक्षरौ। तेन श्रुत्वा, स नादित्यस्याः तृतीयस्य व्यूहेन पूरणम्। अस्य तृचस्य गार्हपत्योपस्थाने विनियोगः ॥

अग्ने त्वम् चतस्रो द्विपदाश्चाग्नेयीर्बन्धुः सुबन्धु श्रुतबन्धुर्विप्रबन्धुरेकैकाः ।

अग्ने त्वमाऽभवाग। वसुरग्नि। तम्त्वा शोचिष्ट। स नो बोधि एतायतस्रो द्विपदा आग्नेयीरग्निदेवत्याः बन्ध्वादिसञ्ज्ञायत्वा दृष्टवय इत्यर्थः। द्वौ द्वौ पादौ यस्याः सा द्विपदा। आसाम् गार्हपत्योपस्थाने एव विनियोगः ॥ द्विपदासु विशेषऋग्वेदानुक्रमण्याम् "द्विद्विपदास्त्वृच समामनन्ति,। ऋचोऽध्ययने त्वध्येतारो द्वे द्विपदे संयोज्य एकैकामृचम् कृत्वा समाप्नोति। 'अयुजुमन्त्या द्विपदे वेति" ॥

इडे काम्या गव्ये ।

इडऽएह। काम्याएत इतीमे यजुषी गव्ये। समयोर्गोदेवतेत्यर्थः। इडे अष्टाक्षरा प्राजापत्या गायत्री यजुरनुष्टुब्वा, काम्या एत। चतुर्दशाक्षरा आसुर्युष्णिग्यथाक्रमम् गा प्रतिगमने गोरालम्भे च विनियोगः ॥ (१)

सोमानम् ब्राह्मणस्पत्यम् त्र्यृचम् गायत्रम् ब्रह्मणस्पतिर्मेधातिथिर्वा ।

सोमानम्, स्वरणम्, यो रेवान्, मा न इत्येतत्त्र्यृचम् ब्राह्मणस्पतिदेवतम् गायत्रीछन्दस्कम् ब्रह्मणस्पतिर्ऋषिर्मेधातिथिर्वा अपश्यत्

(१) काम्यऽएह इति काण्वपाठः ॥

माहनमीयमीसमासस्य यजमानस्य जपे विनियुक्तम् । अत्र सोमा-नमित्यस्याः प्रथमो व्यूहे कृतेऽपि सप्ताक्षरः । तैनैकोना सा तदन्यस्याः द्वितीयः सप्ताक्षरस्तस्य व्यूहेन पूरणम् ॥

महि त्रीणाᳬं सत्यधृतिर्वारुणीरादित्यदेवतम् त्र्यृ-चङ्गायत्रम् पथि स्वस्त्ययनम् ।

महि त्रीणामवोऽस्तु । महि तेषाम् । ते हि पुत्रास इत्येतत्त्र्यृचम् आ-दित्यदेवतम् गायत्रीछन्दस्कम् वरुणस्यापत्यम् सत्यधृतिरपश्यत् जपे विनियोगोऽस्य । महि त्रीणामित्यस्याः प्रथमतृतीययोर्व्यूहेन पूरणम् महि तेषामित्यस्य द्वितीयस्य व्यूहेन पूरणम् । ते हीत्यस्या द्विती-यस्य तृतीयस्य च व्यूहेन पूरणम्, किं च इदम् त्र्यृचम् पथि मार्गे स्व-स्त्ययनम् तस्कराद्युपद्रवभयनाशकारम् । मार्गे गच्छतामेतत्त्र्यृचजपेन कुशलेन स्ववाञ्छितस्थानप्राप्तिर्भवतीत्यर्थः । स्वस्तीत्यविनाशि नाम । अविनाशप्रापकम् ।

कदा चनेन्द्रीं पथ्याबृहतीम् मधुच्छन्दाः ।

कदा चन स्तरीरसीत्येतामृचमैन्द्रीं इन्द्रदेवत्यां पथ्याबृहतीछन्दस्काम् मधुच्छन्दा ऋषिरपश्यत् जप एतस्या अपि विनियोगः । य-स्यास्तृतीयः पादो द्वादशाक्षरः अन्ये त्रयः पादा अष्टाक्षराः सा पथ्याबृहती यथापूर्वस्यां तृतीयो द्वादशाक्षर इत्येतद्धि लक्षणम् पथ्या-बृहतीलक्षणम् पूर्वमुक्तमस्ति तेन इहाप्येषा पथ्या बृहतीत्युच्यते ॥

तत्सवितुर्विश्वामित्रः सावित्रीं गायत्रीम् ।

तत्सवितुर्वरेण्यमित्येतामृचम् सावित्रीम् सवितृदेवत्याम् गायत्री नैकोना । व्यूहेन पूरयेदिति केचित् । अस्या अपि जपे विनियोगः ॥

परि ते वामदेव (१) आग्नेयीमनिरुक्ताम् गायत्रीम् ॥

---

(१) वामदेवस्थाने कण्वानुक्रमणीयस्थः पाठो बोध्यः ॥

(१)परि ते दूडभ इत्येतामृचम् अग्निदेवत्याम् अनिरुक्ताम् म-ध्येऽग्निपदप्रयोगरहिताम् गायत्रीछन्दस्काम् वामदेवऋषिरपश्यत् विश्वामित्रऋषिरपश्यत् । अत्रापि प्रथमं सप्ताक्षरास्त्रिपादस्त्रो व्यूहेन छन्दः पूर्तिः । अस्या अपि जपएव विनियोगः ॥ १२ ॥

यजमानाग्न्युपस्थानमन्त्राः समाप्ताः । अथ शुल्कोपस्थानमन्त्रस्य ऋषिमाह ॥

शुल्कोपस्थानमासुरेरार्षम् भूर्भुवः स्वः ।

भूर्भुवः स्वरित्येतत्शुल्कोपस्थानम् पूर्वोक्तदीर्घोपस्थाना-पेक्षया लघूपस्थानम् ॥

आसुरेरार्षम् । आसुरिरस्य शुल्कोपस्थानस्य सर्वमन्त्राणाम् साधारणऋषिरित्यर्थः । पूर्वोक्तदीर्घोपस्थानापेक्षयाऽस्य शुल्कत्वम् । तत्रैव स्थाने विकल्पेनाहवनीयगार्हपत्ययोरुपस्थाने विनियुक्तम् । तावेवास्य देवता एकविंशत्यक्षरा आसुर्युष्णिक्छन्दः ।

प्रवत्स्यदुपस्थानम् (२) तदुभयमादित्यस्यार्षम् ।

तन्मन्त्राणाम् सर्वेषामेकमादित्यऋषिरित्यर्थः ।

नर्य(३) गार्हपत्यः ।

नर्य प्रजाम् म इत्यस्य गार्हपत्यो देवता सप्ताक्षरा दैवी जगती यजुरुष्णिग्वा गार्हपत्यस्योपस्थाने विनियोगः ॥

शंस्या (४) हवनीयः ।

---

(१) एतन्मन्त्रान्ते "समिद्धोऽसि मनेदय प्रजया च धनेन च" इति मन्त्रार्धं काण्वशाखायामधिकं पठितम् ॥

(२) आगतोपस्थानं चादित्यस्येति काण्वशाखीयस्य च पाठः ॥

(३) प्रजामस्याधिकः काण्वशाखीयस्य पाठः ॥

(४) शंस्य पशून्माहवनीय इति काण्वपाठः ॥

शंस्य पशून्मेऽन्याहवनीयोपस्थाने विनियोग ॥

अपर्यं दक्षिणाग्निः । (१)

अपर्यं पितुमित्यस्य दक्षिणाग्निर्देवता अष्टाक्षरा यजुरनुष्टुप्प्राजापत्या गायत्री वा । दक्षिणाग्न्युपस्थाने विनियोगः ॥

आगन्माहवनीयोऽनुष्टुप् ।

आगन्म विश्ववेदसमित्यस्य आहवनीयो देवता अनुष्टुप्छन्दः । आहवनीयोपस्थाने विनियोगः ॥

अयमग्निर्न्यङ्कुसारिणी (२) गार्हपत्यः ।

अयमग्निर्गृहपतिरित्यस्या ऋचो न्यङ्कुसारिणी बृहतीछन्दः । गार्हपत्योपस्थाने विनियोगः, यस्या ऋचो द्वितीयः पादो द्वादशाक्षरः अन्ये त्रयोऽष्टाक्षराः सा न्यङ्कुसारिणी । द्वितीये न्यङ्कुसारिणी-त्युक्तत्वात् । अत्र तृतीयो नवाक्षरस्तेनैकाधिका ॥

अयमग्निरन्वाहार्यपचनोऽनुष्टुप् । (३)

अयमग्निः पुरीष्य इत्यस्या अन्वाहार्यपचनो देवता अनुष्टुप्छन्दः । अत्र प्रथमः सप्ताक्षरस्तेनैकोना दक्षिणाग्न्युपस्थाने विनियोगः ॥

गृहा मा त्रिष्टुब्विराड्रूपा ।

गृहा मा बिभीतेत्यस्या विराड्रूपा त्रिष्टुप्छन्दः एकादशिनः त्रयोदशिन चत्वारोऽष्टकाश्च विराड्रूपेत्युक्तत्वात् । यस्या एकादशाक्षरास्त्रयः पादा एकोऽष्टाक्षरः सा विराड्रूपेत्युच्यते । अत्र प्रथमो दशाक्षरः तेनैकोना ॥

(१) इदं सूत्रखण्डमपर्यं [illegible] नास्ति ॥

(२) बृहतीत्यधिक [illegible] पाठः ॥

(३) इदं सूत्रखण्डं [illegible] नास्ति ॥

येषामनुष्टुप् ।

येषामध्ये तीन्नि तस्या अनुष्टुप् छन्दः ॥

उपहूता महापङ्क्ति (१) र्व्यवसाना ।

उपहूता इह गावइत्येषा महापङ्क्तिछन्दस्का त्र्यवसाना त्रीण्यवसानानि यस्याम् सा त्र्यवसाना । यस्या अष्टाक्षराः षड्पादा सा महापङ्क्तिः षडष्टका वा महापङ्क्तिरित्युक्तेः, अत्र पञ्चमो नवाक्षर एकैकाधिका ॥

तिस्रोऽपि वास्तवीः शंयुर्बार्हस्पत्यः ।

अहा नेत्यादयस्तिस्रोऽपि वास्तवी वास्तुदेवता । बृहस्पतेरपत्यं शंयुर्नामक ऋषिरपश्यत् गृहोपगमने तिसृणामपि विनियोगः । के नाय वदत्यस्य गृहपवेति ॥ १४ ॥

इत्युपस्थानमन्त्राः ॥ अथ चातुर्मास्यमन्त्राणाम् साधारणमृषिमाह ॥

(२)चातुर्मास्यानि प्रजापतेरार्षम् ।

अथ चातुर्मास्यशब्देन तन्मन्त्रा लक्ष्यन्ते । तेन चातुर्मास्यसम्बन्धिमन्त्राणाम् सर्वेषाम् एक प्रजापतिऋषिरित्यर्थः । यत्र तु कश्चि विशेषोऽभिधीयते तत्रोभावपि ऋषी ज्ञेयौ ॥

प्रघासिनो मारुती गायत्री ॥

प्रघासिनो हवामहइत्येषा मारुती । मरुतोऽस्या देवता गायत्री छन्दः चरुत्या वाचने विनियोगः ॥

यद्ग्रामे मारुत्यनुष्टुब्निरुक्ता ।

यद्ग्रामइतीयमृक् मारुती मरुद्देवत्या । अनिरुक्ता । मध्ये मरुत्पदप्रयोगाभावात् । अनुष्टुप् छन्दस्का । करंभपात्रहोमे विनियुक्ता ।

---

(१) चतुरवसाना इति कोशान्तरे पाठः ॥

(२) अथशब्दश्च कोशान्तरे न पाठः ॥

अथ प्रथम समाचर चतुर्थी नवाचर द्वादशाचरो । तेन पूर्वण् छन्द ॥

मो षूणोऽगस्त्य (१) ऐन्द्रामारुतीम् विराजम् ।

मो षूणइतीमामृचम् इन्द्रमरुद्देवत्याम् विराजम् विराटछन्दस्काम् अगस्त्यऋषिरपश्यत् यजमानस्य जपे विनियोगाऽस्याः, यस्यादशाचरायत्वार पादा सा विराट्। प्रथम पङ्क्ति प्रथम दा चतुष्पदा विराटसंज्ञका इत्युक्ते । अथैन्द्री मारुती जगतीति श्रुतेरैन्द्रा मारुतीमित्युक्त । इन्द्रामरुतश्चास्या देवताइत्यर्थ ।

अक्रन्नुकर्मेत्येषा अनिरुक्ताग्न्यनुष्टुप् । (२)

अक्रन् नकर्माग्नेय्यनुष्टुप ॥ सर्वेनिपदप्रयोगरहिता यस्या अनुष्टुप्छन्द । अत्र तृतीय समाचरस्तनेकामा पत्नीवाचने विनियोग ॥

अवभृथ यज्ञदैवतम् । (३)

अवभृथ निचुम्पुणेत्यत्याशुर्मयज्ञदेवतम् । यजु सकलिङ्गादस्य य जुष्ट्म् । अष्टाचत्वारिंशदक्षरत्वात् ब्राह्मीमनुष्टुप ॥

पूर्णादर्वि द्वे श्रौर्णवाभऐन्द्र्यावनुष्टुभौ ।

पूर्णा दर्वि, देहि मे इतोमे ऋचौ ऐन्द्रो इन्द्रदेवते । अनुष्टुपछन्दस्केश्रौणवाभऋषिरपश्यत् । प्रथमाया दर्व्या आमीत आदनपह पि विनियोग । द्वितीयायामग्नहोमे ॥ (४)

अग्नन्न् (५) द्वे गौतमऐन्द्र्यौ पङ्क्तौ ।

---

(१) अगस्त्यस्यति क पाठस्य पाठ ॥

(२) अ इम सूत्र इत्येषा पद कारावस्य नास्त ॥

(३) अथावभृथ त कारावस्य पाठ ॥

(४) देहि मह्यं इम म त्र भेद नि ते दधे । निहार नि हारामित निहर निहारा स मे स्वाहा । इतक ण्वस्य पाठ ॥

(५) अर्भ मद त त कारावस्य पाठ ॥

अयमग्नीमद्वत्त । सुसन्दृशन्त्वेतीमे ऋचौ इन्द्रदेवत्ये पङ्क्तिछन्दस्के गोतमऋषिरपश्यत् । आहवनीयोपस्थाने विनियुक्ते । यस्याः पञ्चपादा अष्टाक्षरा सा पङ्क्तिः पञ्चपदा । अनादेशेऽष्टाक्षराः पादा इति वचनात् । सुसन्दृशमिति तीयं समाक्षरा तेनैयमेकोना । पञ्चमयोस्तु भयव्यूहेन पूरणम् ॥

मनो नु मानसन् त्र्यृचम् बन्धुर्गायत्रम् ।

मनो न्वाह्वामहे, आ न एतु । पुनर्न इत्येतत्त्र्यृचम् मानसम् मनोदेवतम् गायत्रीछन्दस्कम् बन्धुऋषिरपश्यत् । गार्हपत्योपस्थाने विनियुक्तम् मनो न्विति व्यूहेनाऽपि सप्ताक्षरः तृतीयोऽपि तथा । तेनेयन् न्यूना । आ न इत्यत्र तृतीयः षडक्षरस्तेन न्यूना । पुनर्न इत्यत्र द्वितीयः सप्ताक्षरः तेनैयमेकोना ॥

वयꣳ सोमं गायत्रीम् बन्धुः ।

वयꣳ सोम व्रते इतीमामृचम् सोमदेवताम् । गायत्रीछन्दस्काम् बन्धुऋषिरपश्यत् । अस्या विनियोगो उक्तो नास्ति ॥

एष ते द्वे रौद्रे ।

एष ते रुद्र भाग इमे द्वे रुद्रदेवते यजुषी प्रथमस्य विंशत्यक्षरा । प्राजापत्या बृहती साम्नपङ्क्तिर्वा रौद्राणाम् पुरोडाशानां होमे वि-विनियोगः । द्वितीयस्य द्वादशाक्षरत्वाद्यजुर्जगती । अधिकपुरोडाशस्याखूत्करोपकिरणे विनियोगः ॥

अव रुद्रꣳ (१) रौद्र्यौ ।

अव रुद्रम् (२)भेषजमसीत्येते द्वे ऋचौ रौद्र्यौ रुद्रदेवते । अनयोश्छन्दसी आह ॥

एका पङ्क्तिरपरा ककुप् ।

---

(१) चनस्री रौद्रगाति कारान्तरस्य पाठः

(२) एतादृश ते सुम्नमयोत काण्वशाखीयपाठः ॥

रौद्रीपदमनुवर्त्तते । एतन्ते रुद्रेत्यस्याः आस्तारपङ्क्तिश्छन्दः रु-
द्रो देवता । यस्या ऋचोऽन्त्यौ पादौ द्वादशाक्षरौ आद्यावष्टाक्षरौ ।
सा आस्तारपङ्क्तिः यस्यां चेदास्तारपङ्क्तिरित्युक्तेः । अत्र तु प्रथ-
मो नवकः । द्वितीयोऽष्टकः तृतीयो एकादशकइति छन्दोक्षराणि
पर्यन्तमेव होमावशिष्टानां रौद्रपुरोडाशानाम् भूतयोः कृतानाम्
वृक्षशाखासञ्जने विनियोगः ॥

त्र्यायुषन्नारायणउष्णिहम् यजमानाऽऽशिषम् ।

त्र्यायुषम् जमदग्नेरितीमास्तवम् उष्णिक्छन्दस्कां नारायण ऋ-
षिरपश्यत् । कीदृशी यजमानाशीरेवात्र देवता । यजमानस्य जपे
विनियोगोऽस्याः । यस्या ऋचश्चत्वारोऽपि पादाः सप्ताक्षराः साऽ-
प्युष्णिगित्युच्यते । चतुः सप्तकोष्णिगित्युक्तेः ॥

शिवो नाम क्षौरम् ।

शिवो नामेत्येतद्यजुः क्षौरम् । क्षुरदेवताम् । विंशत्यक्षरा प्रा-
जापत्या बृहती सामपङ्क्तिर्वा । क्षुरादाने विनियोग ॥

निवर्त्तयामि लिङ्गोक्तदेवताशीः प्रायम् ।

निवर्त्तयामीत्येतल्लिङ्गोक्तदेवताम् यजमानस्यात्र प्राधान्यात्तदे-
वात्र देवतेत्यर्थः । आशीः प्रायम् । आशीर्बहुलम् । अष्टाविंशत्य-
क्षरा प्राजापत्या त्रिष्टुप् ।आर्षी उष्णिग्वा ।(१)ऋषिस्तु यथायुक्तः त-
त्र सर्वत्र साधारणः प्रजापतिरेव ज्ञेयः ॥ १५ ॥

---

रुद्रः शतम् ॥ ७६ ॥ इति शुक्लयजुः काण्वसंहितायां नवानुवाकेषु षट्सप्ततिकण्डि-
काया तृतीयोऽध्यायः ॥ ३ ॥ सामिधान्यमग्निर्ज्योतिषपञ्चदशाङ्का ऽउत्तरयन्तो ऽग्न-
र्वरमग्न्यावर्त्त शतिर्भूर्भुव. सप्त प्रयासिनो हवामहे पञ्च पूर्णा दर्वि हे अक्षन्नमीमद-
न्तेष त रुद्र भागो वाजिना वाज षट्कानृतीये नव षट्सप्तति ॥ ३ । ९ । ७६ ॥
इत्यादि काण्वशाखीयसंहितायां पाठश्च बुधैर्बोध्य. ॥

(१) स्थाने विनियोगः इति पद्धतिपाठः ॥

इति चातुर्मास्यमन्त्राः ॥

अथाग्निष्टोममन्त्राणां सर्वेषां साधारणमृषिमाह ॥

अग्निष्टोमः प्रजापतेरार्षम् ॥

अग्निष्टोमग्रहणं तन्मन्त्रोपलक्षणार्थं तेनाग्निष्टोममन्त्राणां सर्वेषां प्रजापतिर्ऋषिरित्यर्थः । यत्र तु ऋषिविशेषोऽभिधीयते तत्राभाष्यृषी ज्ञेयो ॥

एदमगन्मेऽपत्यष्टी व्यवसाने ॥(१)

एदमगन्म, आपोऽद्यान्व, इति इमे द्वे ऋचौ अत्यष्टी । अत्यष्टि छन्दस्के व्यवसाने अवसानद्वययुक्ते । अष्टषष्ट्यक्षरं छन्दोऽत्यष्टिः तत्र एदमिति त्रिभिरक्षरैरधिका । आपइति तु पूर्वेणाष्टमप्यक्षरान्न्यूनाधिका । मन्त्रार्थविनियोगानुसारेण स्वरूपशो देवता आह ॥

आद्यावर्द्धर्चौ देवयजनदेवत्यौ ।

एदमगन्मेत्यस्या ऋच आद्यावर्द्धर्चौ देवयजनदेवत्यौ अरण्यपाणिस्थानाद्यपूर्वाङ्गानामाद्यस्य यजमानस्योच्चारणे विनियुक्तौ ।२॥

इमाऽआपः ॥

इमा आपः शमित्यस्य आपो देवता । गोदानस्नाने विनियोगः ॥

ओषधे कुशतरुणम् ॥

ओषधे त्रायस्वेत्यस्य कुशतरुणं (२)देवता । कुशतरुणधारणे विनियोगः ॥

स्वधिते क्षुरः ॥

स्वधितइत्यस्य क्षुरो देवता । अभिनिधाने विनियोगः ॥

---

(१) एद मित्यत्यष्टिभ्यामाद्या देवयजनदेवत्या इति काण्वसर्वानुक्रमपाठः ॥

(२) कुशतृण इति पाठः ॥

आपोऽअस्मानापः

आपो अस्मानित्यस्यापो देवताः । स्थावरास्वप्सु प्रविश्य स्नाने विनियोगः । न तु कुम्भोदकेन ॥(१)

दीक्षातपसोर्वासः ॥

दीक्षातपसोरित्यस्य वासो देवता । वासः परिधाने विनियोगः ॥

महीनां नवनीतम् ॥

महीनां पयइत्यस्य नवनीतं देवता । पंचदशाक्षरा प्राजापत्यानुष्टुप्सामानुष्टुब्वा । नवनीतेन शरीराञ्जने विनियोगः ॥

वृत्रस्याञ्जनम् ॥

वृत्रस्यासीत्यस्याञ्जनं देवता । अष्टादशाक्षरा साम्नी गायत्री साम्नी बृहती वा । अक्ष्यञ्जने विनियोगः ॥

चित्पतिर्द्वे प्राजापत्ये ॥

चित्पतिर्मा वाक्पतिर्मेत्येते द्वे यजुषी प्राजापत्ये प्रजापतिदेवत्ये इत्यर्थः । आद्या सानुषंगा व्यूहेन चतुश्चत्वारिंशदक्षरा आर्षी त्रिष्टुप् । द्वितीयापि तथैव उभयोरभिषिक्तयजमानपावने विनियोगः ॥

देवो मा सावित्रम् ॥

देवो मा सवितेत्येतत्सवितृदैवतं । आद्यः पञ्चचत्वारिंशदक्षरत्वादेकाक्षराधिकं पूर्वोक्तमेव छन्दः । नाभेरधः पावने विनियोगः ॥

आशो दैव्यनुष्टुबाशी ॥

आशो देवा महतीयं दैवीदेवत्या अनुष्टुप्छन्दस्का । आशीरूपा याचने विनियोगः । अत्र द्वितीयः पादो व्यूहेन पूर्यते ।

(१) [illegible] ॥ [illegible] देवता । [illegible] विनियोगः ॥

स्वाहा यज्ञं चतुर्णां यज्ञ ॥

स्वाहा यज्ञं । स्वाहोरो । स्वाहा द्यावा । स्वाहा वातादित्येतेषां चतुर्णां यजुषां यज्ञो देवता । समाचरा देवीजगती यजुः प्राग्वा च तुर्णां छंदः, अंगुल्यग्रने विनियोगः । सुषाहैत्यस्य देवीउ,प्णक् पञ्चम तंस हितयोरक्षरोऽपूर्वमुच्चारणे विनियोगः ॥

आकूत्यै चतुर्णामौद्ग्रभणानामग्निः ॥

आकूत्यै प्रयुजे मेधायै दीक्षायै सरस्वत्यै एतेषां चतुर्णामौद्ग्रभणानामग्निर्देवता । प्रथमद्वितीयचतुर्थानामौद्ग्रभणहोमे विनियोगः । तृतीयस्य जपे चतुर्णामपि स्याचरत्वादासुरीत्रिष्टुप्छन्द यजुः पङ्क्तिर्वा ॥

आपो देवीर्लिङ्गोक्तदेवता विराट् ॥

आपो देवीर्बृह तीरित्येव लिङ्गोक्तदेवता अप्द्यावापृथिव्यस्तत्र बृहस्पतिदेवतेत्यर्थं । अस्या विराट्छन्दः एकादशाक्षरास्त्रयः पादा यस्या सा विराडुच्यते । दशकाश्चर्या विराडेकादशका येति वचनात् । अत्र प्रथमो द्वादशाक्षरः । तेनैकाधिका । औद्ग्रभणहोमे विनियोगः ॥ १६ ॥

विश्वो देवस्य स्वस्त्यात्रेय साविभीमनुष्टुभम् ॥

विश्वोदेवस्येतीयास्य सवितृदेवतामनुष्टुप्छन्दस्कां स्वस्त्यात्रेय ऋषिरपश्यत् । अस्याद्यौ पादौ सप्ताक्षरौ । तेन द्व्यूना । औद्ग्रभणहोमएवास्या अपि विनियोगः ॥

ऋक्सामयोः कृष्णाजिने ॥

ऋक्सामयोरित्यस्य हे कृष्णाजिनं देवता व्यूहेनचतुर्विंशत्यक्षरा प्राजापत्या पङ्क्ति शुक्लकृष्णसंस्पर्शनार्थे, विनियोगः ।

शर्मासि कृष्णाजिनम् ॥

उपस्पर्शने विनियोगः ॥

**ये देवा वाक्प्राणोदानौ चक्षुः श्रोत्रमध्यात्ममग्नि-मित्रावरुणावादित्यो विश्वेदेवा अधिदैवतम् ॥**

ये देवा मनोजाता इत्यस्य मन्त्रस्याध्यात्मम् आत्मनि अधिकृत्यात्मनि विषये स्वशरीरे वा प्राणोदानौ चक्षुः श्रोत्रं देवता । तथा अधिदैवत देवतास्वधिकृत्य देवतासु मध्ये अग्निर्मित्रावरुणावादित्यो विश्वेदेवा देवताः । तथा च श्रूयते " । इमे वै प्राणा मनोजाता मनोयुजो दक्षक्रतवो वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्य श्रोत्र विश्वेदेवा एतासु हैवास्यैतद्देवतासु हुत भवतीति" इमम्‌ष्टाविंशत्यक्षरा प्राजापत्याचिह्नन्कुम्भमवणे विनियोगः ॥

**स्वाहा आपो जगती ॥**

स्वाहाः प्राणेभ्य इत्येक आपो अब्देवता जगतीछन्दस्का । यस्याश्चत्वारः पादा द्वादशाक्षरा सा अष्टाचत्वारिंशदक्षरा जगती । नाभ्यारम्भे विनियुक्ता । अत्र तु प्रथमद्वितीयावेकादशकौ । ततो द्वौ सप्तकौ । एको वा चतुर्दशक । ततएको द्वादशक इति । जगती वा । पादानामनियताक्षरत्वात् । दशस्वपि नियमाभावात् ।

**इदं ते सौष्ठम् ॥**

इदं ते यज्ञियेत्यस्य सौष्ठं देवता । अष्टाक्षरा यजुरनुष्टुप् । कृष्णविषाणया श्रोत्रादाने विनियोग ॥

**आपो सूत्रम् ॥**

अपो सुद्धामीत्यस्य सूत्रं देवता । मेहने विनियोगः ।

इदं मधो वेंशत्यक्षरा

तेनैकाधिका साम्नित्रिष्टुप् । एकोनाप्यार्षी । गायत्री वा ॥

पृथिव्या लोष्ठम् ॥

पृथिव्या सम्भवेत्यस्य लोष्ठं देवता । षडक्षरा दैवी त्रिष्टुप् । य-
जुर्गायत्री वा । गृहीतस्य लोष्ठस्य प्रतिप्रक्षेपे विनियोगः ॥

अग्ने त्वमाग्नेय्यनुष्टुप् ॥

अग्ने त्वꣳ सुजागृहीतीयमाग्नेयी अग्निदेवत्यानुष्टुप्छन्दस्का । अ
त्र प्रथमत्र्यृचौ समाक्षरौ । तेन द्व्यूना । स्वापप्रारम्भे उच्चारणे विनि-
युक्ता ॥

पुनर्मनऽआग्नेयम् ॥

पुनर्मनइत्येतदाग्नेयं । अग्निदैवतं । यजमानस्य विबुद्धस्य वाच-
ने विनियुक्तं । इयं चतुःपञ्चाशदक्षरा ब्राह्मी बृहती ॥

त्वमग्ने व्रतपाऽआग्नेयीं गायत्रीम् ॥

त्वमग्ने व्रतपा इमामृचमग्निदेवता गायत्रीछन्दस्कां वत्सऋषि-
रपश्यत् । अत्र प्रथमोऽष्टकः द्वितीयः षट्कः स द्व्यूहेन सप्तकः । तृ-
तीयोऽपि व्यूहेन षट्कः तेनेयं प्रतिष्ठा सम्पन्ना गायत्री भवति । विप-
रीता प्रतिष्ठेत्युक्तेः । दीक्षितस्य क्रोधानृतभाषणयोः प्रायश्चित्तार्थोच्चा-
रणे विनियोगः ॥

रास्वेयत्सौम्यम् ॥

रास्वेयत्सोमेत्येतत्सोमदेवतं । सौम्यमिति सोमात्यण् । द्वाविंश-
त्यक्षरा साम्नी त्रिष्टुप् । लब्धस्यानृतवाचने विनियोगः ॥

एषाते हिरण्याज्यदैवतम् ॥

एषा ते शुक्र तनूरित्येतद्यजुर्हिरण्याज्य दैवतं । त्रयस्त्रिंशदक्षरा स्व-
राट् त्रिष्टुप् । बर्हिस्तृणयदृभस्य हिरण्यस्याज्यमध्ये निधाने विनियो-
गः ॥

ऊर्गसि वाग्दैवतम् ॥

नूरसीत्येतत् वाग्देवता । नवाक्षरद्व्यक्षरा वा ऽऽनुष्टुप् याजुषी होमे विनियोगः ॥

**शुक्रमसि हिरण्यम् ॥**

शुक्रमसीत्यस्य हिरण्यं देवता षडक्षरा गायत्री याजुषी वा । हिरण्यस्योद्धरणे विनियोगः ॥

**चिदसि गौः सोमक्रयणी वाग्रूपाध्यारोपकल्पनया ॥**

चिदसि मनासीत्यस्य यजुषः सोमक्रयणी गौर्देवता । कया बुद्ध्या वाग्रूपाध्यारोपकल्पनया । वाग्रूपस्य सोमक्रयण्यां या अध्यारोपकल्पना आरोपबुद्धिस्तया । वाग्रूपैव सोमक्रयणीति बुद्धिरित्यर्थः । "वाग्वै सोमक्रयणीति द्रातेरिति श्रुतेः" । इयम् व्यूहितषष्टाक्षरा ब्राह्मी पङ्क्तिः । चिदसि मनासीत्यनेन सोमक्रयण्यभिमन्त्रणे विनियोगः ॥ (७)

**वस्व्यस्यनुष्टुब्बृहती वा सोमक्रयण्याः स्तुतिः ॥**

वस्व्यस्यदितिरसीत्येषा यजुरनुष्टुप्छन्दस्का । बृहती छन्दस्का वा चतुस्त्रिंशदक्षरत्वाद्विकल्पः । द्वाभ्यामधिका ऽनुष्टुब्वा । द्वाभ्यामूना बृहती वेति । सोमक्रयण्याः स्तुतिः । अतः सोमक्रयण्येवात्र देवतेत्यर्थः । या यत्र स्तूयते सा तत्र देवता भवतीति प्रागुक्तम् । सोमक्रयण्या अनुगमने विनियोगः ॥

**अदित्या ऽआज्यम् ॥**

अदित्यास्त्वा मूर्द्धन्नित्यस्याज्यम् देवता । त्रिंशदक्षरा याजुषी पङ्क्तिः । सोमक्रयणीपदे चतुर्गृहीतहोमे विनियोगः ॥

**अस्मे पञ्चानाम् लिङ्गोक्ता देवता ॥**

अस्मे रमस्वेत्यादीनाम् पञ्चानाम् यजुषाम् लिङ्गेनैव देवता उक्ता ।

न्तभाक्ते इत्येतस्य पदम् पांसुरूपं देवताः । पञ्चाक्षरा दैवीपङ्क्तिश्छन्दः । पदपरिलेखने विनियोगः । यच्चे ते वन्धुरित्यस्य पदम् देवता । पञ्चाक्षरा दैवीपङ्क्तिः पदस्य आत्मामाय।पे विनियोगः । त्वे राय मे रायइत्यस्य यजमानो देवता त्र्यक्षरा दैव्यनुष्टुप्छन्द । यजमानस्य पदप्रतिग्रहणे विनियोगः । मा वयमित्याशी दैवता । एकादशाक्षरा यजुस्त्रिष्टुप् । आत्मालम्भे विनियोग. । तोतो रायइत्यस्य पत्नीदेवत्या चतुरक्षरा दैवी बृहती । पत्नीवाचने विनियोग ॥

समख्ये पत्न्याशीरास्तारपङ्क्तिः ॥

समख्ये देव्येतीयमृक् आस्तारपङ्क्तिश्छन्दस्का । पत्न्याशीर्दैवता । पत्नीवाचने विनियोग, यस्या आद्यौ द्वौ पादावष्टाक्षरौ । तृतीय-चतुर्थौ द्वादशाक्षरौ सा आस्तारपङ्क्ति । "मध्यौ चेदास्तारपङ्क्ति रित्युक्ते." ॥

एष ते त्रिष्टोकदेवतम् ॥

एष ते गायत्रो भागइत्येतद्यजुर्लिङ्गोक्तदेवतम् । व्यूहेन षट्चत्व-रत्वादसाद्यी त्रिष्टुप् ॥ लिङ्गादध्वर्युदेवता । हे अध्वर्यो त्वम् मम इत्येवन् सोमाय ब्रूतादिति सम्बोध्यमानत्वेन प्राधान्यात् । सोमो वा देवता । तस्य स्तूयमानत्वात् । वाचने विनियोग' ॥

आस्माकोसि सोम्यम् ।

आस्माकोऽसीत्येतत्सोमो देवतम् व्यूहेनाष्टादशाक्षरा अगाय-त्री सामबृहती वा सोमालम्भे विनियोगः ॥

अभित्यर्छ० सावित्र्यष्टिः ।

अभित्यमितीयमृक्सावित्री सवितृदेवत्या अस्याः अष्टिश्छन्दः

(१) शुक्लरहस्य इत्यस्य स्थाने च द्रव्यस्य इति काशीशास्त्रीयपाठः ॥

"चतु.पञ्चयवरा अदितिरित्युच्यते चव यत्तामतिविति, प्रजाभ्यस्त्वा, मनु-
प्रापन् त्विति व्युइदयेन पूरणम् सोममाने विनियोग: ॥

प्रजाभ्यस्त्वा प्रजास्त्वा शुक्रान्त्वा सौम्यानि ।

प्रजाभ्यस्त्वा, प्रजास्त्वानु । शुक्रन्त्वा शुक्रेष्वेतानि यजूंषि सौ-
मदेवत्यानि । प्रजाभ्यस्त्वा चतुरक्षरा दैवी बृहती । उष्णीषेण बन्धने
विनियोग: । प्रजाभ्यस्त्वा । पञ्च दशाक्षरा आसुरी गायत्री चतु-
स्त्वा मध्ये विवरणे विनियोग । शुक्रन् त्वा विंशत्यक्षरा प्राजाप-
त्या बृहती याचने विनियोग ॥

सर्वे ऽसमे लिङ्गक्तो ॥(१)

सर्व्वे ते, यम्मे ते इत्येते द्वे लिङ्गोक्तदेवते । सोमविक्रयिदेवते इ-
त्यर्थ. । तत्र सर्व्व ध्यनात् । सर्व्वे चतुरक्षरा दैवी बृहती । हिर
ण्येन सोम विक्रयिहस्तनिविलीकरणे विनियोग । यम्मे ते षड-
क्षरा यजुर्गायत्री । दैवी त्रिष्टुब्वा । यजमानसहितनिधाने वि-
नियोग: ॥

तपसो ऽस्मा ।

तापसस्तनूरित्यस्य यजुषोऽर्द्धे प्रथमे भागे अजादेवता. ॥

अहं सोम: ।

अस्यैव यजुषो द्वितीयेऽर्द्धे परमेव पठनेत्यस्मिन् । द्वितीये भागे
सोमो देवता । समस्ताया एकविंशत्यक्षरत्वादेकाधिका पदपङ्-
क्ति ।एकोना प्राजापत्या जगती वा । द्वयोरप्यर्द्धयोर्याचने विनियोग:॥

मित्रो न एहि सौम्य ।

मित्रो न:एहि, इन्द्रस्योरुमित्येते द्वे सौम्ये सोमदेवते मित्रो न

(१) देवते इत्यधिकम् क पुस्तकर्ग पाठ ।

इत्यस्य नवाक्षरा यजुर्बृहती प्रजासमर्धने सोमादाने च विनियोगः।
इन्द्रायेत्यम्। व्यूहेन विंशत्यक्षरा प्राजापत्या बृहती साम्नी पङ्क्ति-
र्वा सोमो देवता। करौ सोमे निधाने विनियोगः॥

स्वानादीनि धिष्ण्यनामानि।

स्वान भ्राजेत्यस्य मन्त्रस्य स्वान भ्राजेत्यादीनि धिष्ण्यनामानि
देवताः। "एतानि वै धिष्ण्यानाम् नामानीति श्रुतेः"।(१)स्वानाद-
यएवात्र देवता। द्वाविंशत्यक्षरा प्राजापत्या जगती जपे विनियोगः।

परि माऽग्ने यो पुरस्ताद्बृहती।

परि माऽग्नइत्येषाऽग्निर्देवता पुरस्ताद्बृहतीच्छन्दस्का वाचने वि-
नियुक्ता। यस्या आद्यः पादो द्वादशाक्षरः। अन्ये अष्टाक्षराः सा
पुरस्ताद्बृहती "आद्यश्चेत्पुरस्ताद्बृहतीत्युक्ते." अत्र प्रथमतृतीयपा-
दयोर्व्यूहेन पूरणम्। तृतीयचतुर्थपादसन्धौ व्यूहेन छन्दःपूर-
णम्॥

प्रतिपन्थामनुष्टुप्पथिदेवत्या।

प्रतिपन्थामपद्महीतीयमृक् अनुष्टुप्पथि देवत्या। पन्था
यस्या देवतेत्यर्थः। अत्रापि सुपथि नामिभि व्यूहेन पूरणम्
जनः प्रतिगमने विनियोगः॥

अदित्याः कृष्णाजिनम्।

अदित्यास्त्वगित्यस्य कृष्णाजिनं देवता। अष्टाक्षरा यजुरनुष्टुप्
प्राजापत्या गायत्री वा। कृष्णाजिनास्तरणे विनियोगोऽस्य यजु-
षः॥

अदित्यै सौम्यम्।

---

१यं श्रुतिः शतपथब्राह्मणस्य तृतीयकाण्डाध्यायस्य द्वितीयप्रपाठकस्य पञ्चा-
नन्तरैकादशखण्डस्य च ज्ञेया॥

अदित्यै सदयासीदित्यस्य यजुरनुष्टुप्छन्दस्काम् सोमो देवता । अग स सोमनिधाने विनियोगः ॥

अस्तभ्नात्त्रिष्टुभौ वारुण्यौ ।

अस्तभ्नाद्याम् । वनेषु व्यन्तरिक्षमिति द्वे ऋचौ त्रिष्टुप्छन्दस्के वारुण्यौ वरुणदेवत्ये अस्तभ्नादित्यस्य याचने विनियोगः । वनेषु इत्यस्य सोमपर्याणहनेन परितनने विनियोगः । अत्र प्रथमतृतीयपादयोर्यथादेशव्यूहेन पूरणम् ॥

सूर्यस्यानुष्टुप्कृष्णाजिनम् ।

सूर्यस्य चक्षुरित्यनुष्टुप्छन्दः कृष्णाजिनम् देवता । कृष्णाजिनस्य पुरस्तादासञ्जने विनियोगः ॥

उस्राऽऊर्ध्वबृहत्यानडुही ।

उस्रावेतमितीयमृक् आनडुही । अनडुवाहावस्य देवतेत्यर्थः । ऊर्ध्वबृहतीछन्दः । यस्याश्चत्वारः पादा द्वादशाक्षराः । "सोर्ध्वबृहती त्रिजगत्यूर्ध्वबृहतीत्युक्ते" । एकोनेयम् । अत्र प्रथमे पादे दशाक्षरो विपरीतम् वा । अनडुद्योजने विनियोगः ।

भद्रो मे सौम्यम् ।

भद्रो मेऽसीत्येतत्सोमदैवतम् । एतन्नसात्यष्टित्वादेकाक्षराधिका अत्यष्टिश्छन्दो याचने विनियोगः ॥

नमो मित्रस्याभितपनः सूर्यं सौरीं जगतीम् ।

नमो मित्रस्येतीमामृचम् सौरीं सूर्यदेवताम् जगतीछन्दस्काम् अभितपन' सूर्यस्योपस्थानम् । अभितः सर्वतस्तपतीत्यभितपनः । प्रथमाभागोपारूढस्यमानस्त्वथ । अष्टाचत्वारिंशदक्षरा जगती याचने विनियोगः ॥

वरुणस्य पञ्च वारुण्यानि ।

वरुणस्योत्तम्भनमसीत्यादीनि पञ्च यजूंषि वरुणदैवतानि । प्रा-थमस्य नवाक्षरा यजुर्बृहतीछन्दः । उत्तम्भनेनानसस्तम्भने विनि-योगः द्वितीयस्य दशाक्षरा यजुःपङ्क्तिः । आसन्द्यभिमर्शने विनि-योगः । चतुर्थस्य एकादशाक्षरा यजुस्त्रिष्टुप् । कृष्णाजिनास्तरणे विनियोगः । पञ्चमस्य द्वादशाक्षरा यजुर्जगती । आसन्द्यां सोम-निधाने विनियोगः ॥

या ते सौमी त्रिष्टुभम् गोतमः ।

'या ते धामानीत्येताम् सोमदेवता त्रिष्टुप्छन्दस्काम् गोतमऋ-षिरपश्यत् । वाचनेऽस्य विनियोगः । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् ॥ सूत्रेण पूरणम् ॥ १८ ॥

अग्नेस्तनूरसि पञ्च वैष्णवानि ।

अग्नेस्तनूरसीत्यादीनि पञ्च यजूंषि विष्णुदेवतानि हविर्ग्रहणे विनियुक्तानि । अग्नेस्तनूः दशाक्षरा यजुः, सोमस्य एकादशाक्षरा यजुस्त्रिष्टुप् । अतिथेः द्वादशाक्षरा यजुर्जगती ॥ श्येनाय त्वा । यजुर्जगत्येव । अग्नये त्वा । त्रयोदशाक्षरा आसुर्यनुष्टुप् ॥

अग्नेः शकटम् ।

अग्नेस्तनूरसीत्यस्य शकटम् देवता षडक्षरा यजुर्गायत्री । दै-वी त्रिष्टुब्वा । शकटादाने विनियोगः ॥

वृषणौ (१) दर्भतृणके ।

वृषणौ स्थ इत्यस्य दर्भतृणे देवता । चतुरक्षरा दैवीबृहती दर्भतृण-योर्निधाने विनियोगः ॥

उर्वश्यसि त्रयाणाम् लिङ्गोक्ता देवताः ।

उर्वश्यसीत्यादित्रयाणाम् यजुषाम् देवता लिङ्गोक्ताः । तत्रो-

(१) वृषणौ स्थ इति क पुस्तकपाठः ।

घर्मासीत्यध्वरावृषिर्देवता । चतुरक्षरा दैवी बृहती । अध्वरावेक्षि-धाने विनियोगः । आयुरित्यस्य घृतम् देवता । दैवी बृहती । आ-ज्यस्थालीसंस्पर्शने विनियोगः । पुरूरवा इत्योत्तरारणिर्देवता । प-ञ्चाक्षरा यजुर्गायत्री । अधरारण्येरुपरि समवनिधाने विनियोगः ॥

गायत्रेण त्रीण्याग्नेयानि ।

गायत्रेण त्वा, त्रैष्टुभेन त्वा, जागतेन त्वा, एतान्यग्निदेवतानि । मन्थने विनियुक्तानि । त्रयाणामप्येकादशाक्षरा यजुस्त्रिष्टुप् ॥

भवतं नः पङ्क्तिः ।

भवतम् न इत्यस्याः पङ्क्तिश्छन्दः । पञ्चपदा चत्वारिंशदक्षरा पङ्क्तिः । अत्र तु तृतीयः षडक्षरः । चतुर्थो दशाक्षरः । पञ्चमोऽष्टाक्षरः । तेनेयमार्षी पङ्क्तिरिति युक्तम् । पादानामनियताक्षरत्वात् ॥

अग्नावग्निर्विराट् ।(१)

अग्नावग्निरित्यस्य विराट्पङ्क्तिश्छन्दः । क्वचिदत्र विराडिति पाठः । दशाक्षरैश्चतुर्भिः पादैर्विराड्भवति "विराड्दशकाः इत्युक्तेः" । अत्र तु द्वितीयचतुर्थावेकादशाक्षरौ । तेन द्वाभ्यामक्षराभ्यामूना त्रिष्टुबपि विराडित्युच्यते । "द्वाभ्याम् विराट्स्वराजावित्युक्तेः" । तेनेयम् विराट्त्रिष्टुप् । न तु विराटपङ्क्तिरिति ॥

एतयोर्निर्मथ्याहवनीयावग्नी देवते ।

एतयोर्भवतम् नः । अग्नावग्निरित्येतयोर्निर्मथ्याहवनीयावग्नी देवते । निर्मथ्यश्च आहवनीयश्च निर्मथ्याहवनीयौ एतौ द्वावग्नी देवते इत्यर्थः । भवतम् न इत्यस्याग्निसमासने विनियोगः । अग्नावग्निरित्यस्याज्याहुतिहोमे विनियोगः ।

---

(१) अग्नाऽअग्निरिति काण्वशाखापाठः ॥

आपतये वायव्यम् ।

आपतयइत्येतद्यजुर्वायुदेवतम् । षट्त्रिंशदक्षरा प्राजापत्या त्रिष्टुप् । प्रोक्षस्य वपदाने विनियोगः ॥

अनाधृष्टमाज्यम् ।

अनाधृष्टमसीत्यस्याज्यम् देवता आर्षेण द्वात्रिंशदक्षरा प्राजापत्या उष्णिक् । तानूनप्त्रसंमर्शने विनियोगः ॥

अग्ने व्रतपाऽआग्नेयम् ।

अग्ने व्रतपाइत्येतद्यजुरग्निदेवतम् समिदाधाने विनियुक्तम् । अष्टापञ्चाशदक्षरत्वाद्द्वाभ्यामधिका प्रकृती वा । द्वाभ्यामूना अतिप्रकृती वा ब्राह्मी पङ्क्तिर्वा ॥

अꣳशुरꣳशु. प्रकृतिश्चतुरवसाना सौमी । (१)

अꣳ० शुरꣳ० शुष्ट इति इयमृक्चतुरवसाना प्रकृतिछन्दस्का च-त्वार्यवसानानि विरामस्थानानि यस्याम् सा तथा । सौमी सोम-देवता । सोमाप्यायने विनियुक्ता । चतुरशीत्यक्षरा प्रकृतिः । अन्त्यो-ऽर्द्धर्चो लिङ्गोक्तदेवत । अत्यक्षरत्वष्टाक्षरत्वस्या अन्त्योऽर्द्धर्चः ॥

एष्टारायऽइत्यं (२)लिङ्गोक्तदेवतः ।

अग्निदेवते ते माधवाचार्याः । अन्येषाम् ग रायः सतम्, द्यावापृथिव्यौ वा । प्रस्तरनिह्नवेऽस्य विनियोगः ॥

या ते (३)त्रीण्य.ग्नेयानि ।

या ते अग्नइत्यादीनि त्रीणि यजूंष्यग्निदेवतानि उपसत्सु स्रुवे-णाज्यहोमे विनियुक्तानि प्रत्यहम् क्रमेण प्रथमा भुरिक्त्रिष्टुप् । अग

(१) प्रकृतिः षडवसाना इति कात्यशाखीयपाठः ॥

(२) अग्स्त्योऽर्द्धचो इति कात्यायनसर्वानुक्रमे विशेषः पाठो बोध्यः ॥

(३) अग्ने इति पदमोक कात्यायनसर्वानुक्रमे ॥

त्रिंशदक्षरत्वात् । अ.रेणया, रथःमया, अपि एकाक्षराधिके ऋचौ त्रिष्टुभावेव ।

**तप्तायनी चत्वारि पार्थिवानि ।**

तप्तायनी मेऽसीत्यादीनि चत्वारि यजूंषि पार्थिवानि पृथिवीदेवतानि चतुर्णामपि चात्वालपरिलेखने विनियोगः । तप्तायनी पञ्चाक्षरा यजुर्गायत्री, वित्तायनी च तथैव । तृतीयचतुर्थौ सप्ताक्षरे दैव्यौ जगत्यौ यजुरुष्णिहौ वा ॥

**विदेदग्नेयम् ।**

विदेदग्निरित्येतद्यजुरग्निदेवतम् । चात्वाले प्रहरणे विनियुक्तम् । अष्टादशाक्षरा ऋग्गायत्री ॥

**अग्नेऽअङ्गिरो योऽस्यामनुत्वा लिङ्गोक्तानि ।**

एतानि त्रीणि यजूंषि लिङ्गोक्तदेवतानि । तत्र अग्नेऽङ्गिरः । अग्निर्देवता । एकादशाक्षरा यजुस्त्रिष्टुप् । पुरीषहरणे विनियोग. । योऽस्याम् । अग्निरेव देवता । द्वाचत्वारिंशदक्षरा साम्नीत्रिष्टुप् । पुरीषनिवापे विनियोग. । अनुत्वा । अत्र उत्तरवेदिम् प्र.स .मीयमानां स्तुवति उत्तरवेदि देवता । अष्टाक्षरा प्राजापत्या गायत्री । पुरीषहरणे विनियोगः । यो द्वितीयस्याम् । यस्तृतीयस्यामित्यनयोरग्निदैवता । "(१)स वा अग्नीशाभिव नामानि व्यनुद्दरति यास्या अमू न् देवा अपेऽग्नीन्हितायाय प्राक्षणस तेप्राधन्वस्तऽस्मा एव पृथिवीरूपामर्पमिमामद्वैव हे अस्याः परे इतियुतेः" । परे अन्तरिक्षम् द्यौश । द्वितीया पृथिव्यन्तरिक्षम् तृतीया पृथिवी द्यौरिति ॥

**सिंहीरसि नयानाम् वेदिः**

सिंहीरसि सपत्नसाहीत्यादीनाम् नयानाम् उत्तरवेदिर्देव-

(१) इयमत्र शतपथीयाध्वरकाण्डस्य श्रुतिर्बोध्येति ॥

ताः । प्रथमस्य उत्तरवेदिव्यूहेन विनियोगः । द्वितीयस्य प्रोक्षणे । तृतीयस्य सिकतोपकिरणे । त्रयाणामपि पञ्चदशाक्षरा आसुरी गायत्री छन्दः ॥

इन्द्रघोषस्त्वतुर्णामुत्तरवेदिः ।

इन्द्रघोषस्त्वा । प्रचेतास्त्वा । मनो जवास्त्वा, विश्वकर्मा त्वा, इत्येतेषाम् चतुर्णां यजुषाम् उत्तरवेदिर्देवता । उत्तरवेदिप्रेक्षणे विनियोगः । तत्र प्रथमचतुर्थयोस्त्रयोदशाक्षरा आसुरीत्रिष्टुप् । द्वितीयस्य दशाक्षरा यजुः पङ्क्तिः । तृतीयस्य चतुर्दशाक्षरा आसुर्युष्णिक्साम्नी विज्ञेया ॥

इदमहमापम् ।

इदमहम् तप्तम् वारित्यस्यापो देवताः । षोडशाक्षरा प्राजापत्यानुष्टुप् । प्रोक्षणीशेषस्य निनयने विनियोगः ॥

सिंहीरसि पञ्चानाम् वाक् ।

सिंहीरसि स्वाहेत्यादीनाम् पञ्चानाम् यजुषाम् वाग्देवता । नाभिश्रावारणे विनियोगः । प्रथमस्य दैवीपङ्क्तिश्छन्दः । द्वितीया नवाक्षरा यजुर्बृहती । तृतीया त्रयोदशाक्षरा आसुर्यनुष्टुप् । चतुर्थी षोडशाक्षरा साम्नानुष्टुप् । पञ्चमी चतुर्दशाक्षरा साम्नीष्णिक् ॥

भूतेभ्यः स्रुक् ।

भूतेभ्यस्त्वेत्यस्य स्रुग्देवता चतुरक्षरा दैवीबृहती स्रुगुद्यमने विनियोग ।

ध्रुवोऽसि परिधयस्त्रयाणाम् ।

ध्रुवोऽसि, ध्रुवक्षिदसि, अच्युतक्षिदसीत्येतेषाम् त्रयाणाम् परिधयो देवताः पैतुदारवपरिधिपरिधाने विनियोगः । ध्रुवोऽसि ।

ष्टाक्षरा प्राजापत्या गायत्री । द्वितीयतृतीययोर्दशाक्षरा यजुः पङ्क्तिः ॥

चाग्ने: (१)सध्मारा गुल्गुलाद्यः ।

चाग्ने: पुरीष्यमसीत्यस्य गुल्गुलुसगन्धितेजनवृष्णीमुकाः सध्मारा देवताः । सप्ताक्षरा दैवी जगती : सध्मारनिर्वपणे विनियोगः ॥१८॥

युञ्जते श्यावाश्वः सावित्रम् (२)जगतीम् ।

युञ्जते मनइतीमाम् सावित्रीम् सवितृदेवताम् । जगतीछन्दस्काम् श्यावाश्व ऋषिरपश्यत् । अष्टाचत्वारिंशदक्षरः जगती चतुष्पादा । प्रातः प्रथमम् प्राणायामे चतुर्गृहीतहोमेऽस्य विनियोगः ।

इदम् विष्णुर्मेधातिथिर्वैष्णवीं गायत्रीम् ।

इदम् विष्णुरितीमामृचम् विष्णुदेवताम् गायत्री छन्दस्काम् मेधातिथिऋषिरपश्यत् । दक्षिणस्यानसो दक्षिणे वर्त्मनि हिरण्यस्यो परिहोमे विनियोगः । अस्याः द्वितीयः पादः सप्ताक्षरः सैनैकाना ॥

इरावती वसिष्ठस्त्रिष्टुभम् ।

इरावती धेनुमती इतीमामृचम् विष्णुदेवताम् त्रिष्टुपछन्दस्काम् वसिष्ठऋषिरपश्यत् । अत्रेव वैष्णवीमित्यनुवर्त्तते । उत्तरस्यानसो दक्षिणवर्त्मनि हिरण्यस्योपरिहोमे विनियोगः । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । तत्रोपपादौ च दशाक्षरौ चान्यौ द्वादशाक्षरः । आर्षीत्रिष्टुब्बहुपादानाम नियताक्षरत्वात् ॥

देवश्रुतावन्त्यश्रुतौ ।

(१) अत्र सध्मारा इति काण्वसर्वानुक्रमाद्यादर्शपुस्तकान्तरे अधमारसध्मारेति पाठः शोध्यः ॥

(२) सावित्रीमिति नास्ति पाठ ॥

देवश्रुतावित्यस्याक्षधुरी देवते । अक्षधुरोऽञ्जने विनियोगः दशाक्षरा यजुःपङ्क्तिः ॥

प्राची स्वङ्गोष्ठमत्र(१) हविर्द्धानी ।

प्राची प्रेतम् । स्वङ्गोष्ठम् । अत्र रमेथामित्येषाम् त्रयाणाम् यजुषाम् हविर्द्धाने देवते । प्राची प्रेतम् त्रयोविंशत्यक्षरत्वादेकाऽधिका साम्नीत्रिष्टुप् एकोना आर्षी गायत्री वाचने विनियोगः । स्वङ्गोष्ठम् पञ्चविंशत्यक्षरत्वादेकाधिकाक्षराऽनुष्टुप् स्वर्जनानमित्ते वाचने विनियोगः । अत्र रमेथाम् । दशाक्षरा यजुःपङ्क्तिः । अनसोरभिमन्त्रणे विनियोगः ॥

विष्णोर्नु तिस्रो वैष्णव्यस्त्रिष्टुभ आद्ये यजुरन्ते ।

विष्णोर्नुकम् । दिवो वा । प्रतद्विष्णुरित्येतास्तिस्र ऋचो विष्णुदेवत्यास्त्रिष्टुप्छन्दस्काः । अत्र विष्णोर्नुकमिति दशाक्षरः पादः । तेनैकोना । चतुर्थस्य व्यूहेन पूरणम् । प्रतद्दित्ययमपि दशाक्षरएव । तेनेयमप्येकोना । तासाम् मध्ये आद्ये प्रथमद्वितीये ऋचौ, विष्णोर्नु कम्, दिवो वा विष्णो, इत्येते द्वे ऋचौ यजुरन्ते । द्वयोरप्यन्ते विष्णवे त्वेति यजुरस्तीत्यर्थः । विष्णोर्नुकमित्यस्य दक्षिणस्यानस उपस्तम्भने विष्णवे त्वेत्यस्य च स्यूतानिखनने विनियोगः । दिवो वेत्यस्योत्तरस्यानसउपस्तम्भने (२)विष्णवे त्वेत्यस्य च स्यूतानिखनने विनियोगः । चतुरक्षरा दैवी बृहतीछन्दः । प्रतद्दित्यस्य च वाचने विनियोगः ॥

विष्णोर्नु प्रतद्दीर्घतमा औतथ्यः ।

विष्णोर्नु कम् । प्रतद्विष्णुरित्येतयोरुतथ्यस्यापत्यम् दीर्घतमा

---

(१) रमेथामित्यत्र पदमधिकं तत्र सर्वानुक्रमे । हविर्द्धानीत्यनन्तरमधिकः पाठो ज्ञेयः ।

(२) उत्तरहविर्द्धानस्योपस्तम्भने इति पाठः ॥

सप्ताक्षरयि ॥

विष्णोरराटम् पञ्च वैष्णवानि ।

विष्णोरराट मित्यादीनि पञ्च विष्णुदेवतानि । प्रथमस्य सप्ताक्षरा दैवी जगती याचने विनियोगः । द्वितीयस्य पञ्चाक्षरा दैवीपङ्क्ति र्योचने विनियोगः । विष्णो स्यू दैवीपङ्क्ति । सीव्ने विनियोग । विष्णोर्ध्रुवोऽसि दैवीपङ्क्ति । ग्रन्थिकरणे विनियोगः । वैष्णवमसि दैवीपङ्क्ति । हविर्धानाभिमन्त्रणे विनियोग ॥

अग्ने दैऽग्निः ।

अग्ने नयेत्यस्याग्निर्देवता । पञ्चाक्षरा यजुर्गायत्री । अग्न्याधाने विनियोग ॥

इदमहꣳ रक्षोघ्नम् ।

इदमहमित्येतद्रक्षोघ्नम् यजुः । चतुर्दशाक्षरा साम्नीत्रिष्टुप् । उपरवपरिलेखने विनियोग । अथवा रक्षोघ्नम् देवता ।

बृहन्नीपरवम् ।

बृहन्नसीत्यौपरवम् उपरवदैवतम् उपरवखनने विनियोगः । अष्टादशाक्षरा साम्नीबृहती ॥

इदमहम् पञ्च लिङ्गोक्तानि ।

इदमहम् तम् वलगमित्यादीन्युत्तरत्र इ किरामीत्यन्तानि पञ्च यजूꣳषि लिङ्गोक्तदेवतानि । । वलगदेवतानीत्यर्थः । पञ्चमस्य उत्कृत्यदेवतेति विशेष । कृत्यादेवत्या इति कात्यायनसूत्रभाष्ये । पञ्चानामपि पांसूहापे विनियोग । आद्या चतुर्विंशत्यक्षरा आर्षी । अनुष्टुप् द्वितीया षड्विंशत्यक्षरा द्वाभ्यामधिका आर्षी अनुष्टुप् । एकेनोना अनुष्टुबृहती वा । तृतीयाचतुर्थ्यावप्येवम् । पञ्चमी यजुर्गायत्री दैवीत्रिष्टुब् ॥

स्वराडस्यौपरवाणि चत्वारि ।

स्वराडसि सपत्नहेत्यादीनि चत्वारि यजूंष्यौपरवाणि उपरवा घयान् देवताइत्यर्थः । उपरवाणामवमर्शने विनियोगः । तत्र प्रथ- मतृतीयचतुर्थानाम् अष्टाक्षरा प्राजापत्या गायत्री । द्वितीयस्य यजुर्बृहती ॥

रक्षोहणो वः सप्त वैष्णवानि ।

रक्षोहणो वो वलगहन इत्यादीनि वैष्णवास्थेत्यन्तानि सप्त यजूं- षि विष्णुदेवतानि प्रथमस्य षोडशाक्षरा प्राजापत्यानुष्टुप् । उ- परवप्रोक्षणे विनियोगः । द्वितीयस्य व्यूहिनाऽष्टादशाक्षरा ऋग्गायत्री । प्रावणीमैयावनयने विनियोगः । तृतीयस्य ऋग्गायत्री । बर्हिरा- स्तरणे विनियोग । चतुर्थस्याष्टादशाक्षरा ऋग्गायत्री । अधिष वणफलकोपधाने विनियोगः । पञ्चमस्य सप्तदशाक्षरत्वादेकोना ऋग्गायत्री एकाधिका साम्न्यनुष्टुब्वा पर्यूहणे विनियोगः । ष- ष्ठस्य दैवीपङ्क्तिः अधिषवणचर्मास्तरणे विनियोग । सप्तमस्य चतु- रक्षरा दैवीबृहती । ग्राव्णाम् निधाने विनियोग ॥

यवोऽसि यवः ।

इयवोऽसीत्यस्य यवो देवता । चतुर्दशाक्षरा साम्न्युष्णिग्वा यवाग्- वपने विनियोग ।

दिवे त्वौदुम्बरी ।

दिवे त्वादीनाम् । यथायथम् । यजुषामौदुम्बरी देवता । औदुम्ब- र्युपोक्षणे विनियोग । प्रथमा दैव्यनुष्टुप् त्र्यक्षरा । द्वितीया षडक्षरा यजुर्गायत्री । तृतीया चतुरक्षरा दैवीबृहती ॥ (१)

---

(१) औदुम्बर्या अवमोक्षणे वि० । अन्तरिक्षे त्वा प्रजापति ऋ० ३ द नरो देवता यजुर्गायत्री छन्द औदुम्बर्या मध्यप्रोक्षणे वि० । पृथिव्यै त्वा औदुम्बरी दे- वता दैवी बृहती छन्द औदुम्बर्या मूलप्रोक्षणे वि०

शुन्धन्ताम् पितरः ।

शुन्धन्तामिति द्वे यजुषी पितृदेवत्ये । दशाक्षरा यजुः पङ्क्तिः प्रथमा । शेषाम्बरधने विनियोगः । द्वितीया समाक्षरा दैवीजगती । बर्हिषाम् स्तरणे विनियोगः । पितृत्वात् उदकस्पर्शः ॥ (१)

उद्दिवम् पञ्चानामौदुम्बरी ।

उद्दिवꣳ स्तभानेत्यादि प्रदासीत्यन्तानाम पञ्चानाम् यजुषामौदुम्बरीदेवता । औदुम्बर्युच्छ्रयणे विनियोगः । प्रथमस्य व्यूहेनाष्टादशाक्षरा ऋग्गायत्री ।

धुवासत्वा ।

एकविंशत्यक्षरत्वादेकाधिका ऋग्गायत्री औदुम्बर्या अवटमध्ये प्रवेशे वि० । ब्रह्मवनि त्वा इत्यस्य ऋग्गायत्रीएकोना साम्नपङ्क्तिर्वा । पांसुभिः पर्यूहणे विनियोगः । ब्रह्म दृꣳह पञ्चदशाक्षरा आसुरी गायत्री पर्युक्षणे विनियोगः । ध्रुवासि व्यूहने चतुर्विंशत्यक्षरा साम्नजगती । वाचने विनियोगः ॥ (२)

घृतेन द्यावापृथिवी ।

घृतेनेत्येकं यजुर्द्यावापृथिवीदेवतम् । एकादशाक्षरा यजुस्त्रिष्टुप् विशाखे होमे विनियोगः ॥

इन्द्रस्यैन्द्रम् ॥

इन्द्रस्य छदिरसीत्यैन्द्रदेवतं । साम्नीत्रिष्टुप् । छदिरारोपणे विनियोगः ।

---

(१) शुन्धन्तां प्रजा० पितरो देवता यजुः पङ्क्तिश्छन्दः शेष वसने वि० । वितृणदना प्रजा० पितरो दे० बर्हिषा स्तरणे वि० । ईदृश पद्धतौ पाठो दोषः ॥

(२) ध्रुवासत्वा औदुम्बरीदे० ऋग्गायत्री औदुम्बर्या अवटमध्ये प्रवेशे वि० । ब्रह्मवनि त्वा प्र० ऋ० औदुम्बरीदे० ऋग्गायत्री पांसुभिः पर्यूहणे वि० । अग्ने. पर्युक्षणे वि० इति पद्धतिपाठः ॥

परि त्वा मधुच्छन्दा अनिरुक्तामैन्द्रीमनुष्टुभम् ॥

प रित्वा गिर्वणइतोमामृचमनिरुक्तां मध्ये इन्द्रपदप्रयोगशून्यामिन्द्रीत्यामनुष्टुभं मधुछन्दाऋषिरपश्यत् । परिवारेण विनियोगः ॥

इन्द्रस्येन्द्राणि त्रीणि ॥

इन्द्रस्य स्यूरसीत्यादीनि त्रीण्यैन्द्राणि इन्द्रदेवत्यानि । प्रथमा दैवीपङ्क्तिः सीवने विनियोगः । द्वितीया यजुर्गायत्री । ग्रन्थिकरणे विनियोगः । ऐन्द्रमसि । दैवीबृहती । निहिताभिमर्शने विनियोगः ॥

चतुर्थं वैश्वदेवम् ॥

चतुर्थं वैश्वदेवमसीत्येतद्यजुर्विश्वेदेवदेवतं । यजुर्गायत्र्याग्नीध्राभिमर्शने विनियोग. ॥ २० ॥

विभूरष्टानां धिष्ण्याग्नयः ॥ (१)

विभूरसि प्रवाहणइत्यादिशुन्ध्यूरसीत्यन्तानामष्टानां यजुषां धिष्ण्याग्नयो देवताः । विभूः प्राजापत्या गायत्री चाग्नीध्रीये पुरीषनिवापे विनियोगः । वह्निः यजुर्बृहती होतृधिष्ण्ये पुरीषनिवापे विनियोगः । श्वात्रोऽसि । यजुर्गायत्री । तुथोऽसि दैवीजगती । उशिगसि यजुर्गायत्री । अङ्घारिः । प्राजापत्यागायत्री । भवस्युर्गायत्र्येव । शुन्ध्यूः गायत्री । सर्वेषां पुरीषनिवापे विनियोगः ॥

सम्राडाहवनीयः ॥

सम्राडसीत्यस्याहवनीयो देवता । दैवीजगती । आहवनीयेक्षणे विनियोग ॥

---

(१) एतस्य सूत्रस्य खण्डद्वयमे काण्वसर्वानुक्रमे"ऋतधामाऽसि स्वर्ज्योतिः समुद्रोऽसि विश्वव्यचा ब्रह्मासनमोजोऽसि शाल्यद्वार्योऽसि भ्राज हेतः । अथ पाठो माध्यन्दिनसर्वानुक्रमे-सूत्रखण्डचतुष्टयमे पूर्वापरीभावेण वर्तते ॥

परिपदो बर्हिष्यमानदेश: ॥

परिपदाऽसीत्यस्य बर्हिष्यमानदेशो देवता । यजुर्बृहतीबर्हिष्य-
मानदेशस्पर्शने विनियोग. ॥

नभोऽसि चात्वाल: ॥

नभोऽसि इत्यस्य चात्वालो देवता । यजुर्गायत्री । चात्वाले
क्षणे विनियोग. ।

स्पृष्टऽसि शामित्र. ॥ (१)

सृष्टोऽसीत्यस्य शामित्रो देवता । प्राजापत्या गायत्री । शामित्रे-
क्षणे विनियोग. ॥

ऋतधामौदुम्बरी ॥

ऋतधामासीत्यस्योदुम्बरी देवता । प्राजापत्या गायत्री । औदुम्ब-
रीक्षणे विनियोग· ।

समुद्रोऽसि ब्रह्मासनम् ॥

समुद्रोऽसीत्यस्य ब्रह्मासनन्देवता । प्राजापत्या गायत्री । ब्रह्मास
नेक्षणे विनियोग: ॥

अजोऽसि आग्नीध्रीयं ॥

अजोऽसि एकपादित्यस्य आग्नीध्रीयो देवता । दैवीपङ्क्ति: आग्नी
ध्रीयेक्षणे विनियोग ॥

अहिरसि प्राजहित· ॥

अहिरसीत्यस्य प्राजहितो देवता । यजुर्गायत्री प्राजहितेक्षणे
विनियोग । समूढोऽसि विश्ववेदा इतिमूर्धान्तस्य जगतीछन्द

(१) समूढोऽस्युक्त । इति काण्वसर्वानुक्रमेऽधिक पाठो मन्त्रश्च 'समूढोऽसि
विश्ववेदा' इतिकस्य भाष्ये उक्तम् ॥

चत्वारो देवता चत्वारेत्यस्य विनियोगः ॥

वागसि सदः ॥

वागसीत्यस्य सदो देवता । यजुर्बृहती सदोऽभिमर्शने विनियोगः ॥

ऋतास्य द्वार्ये ॥

ऋतस्य द्वाराविति द्वार्ये देवता । यजुः पङ्क्तिः । १० द्वार्ययोरभिमर्शने विनियोगः ॥

अध्वनामधिपते ॥

अध्वनामित्यस्य सूर्यो देवता । सूर्याभिमन्त्रणे विनियोगः ॥ व्यूहेन सप्तजगती ॥ ७४ ॥

मित्रस्य धिष्ण्यं ॥

मित्रस्य सेत्यस्य लिङ्गा देवता यजुर्बृहती ॥ २ ॥ धिष्ण्याभिमन्त्रणे विनियोगः ॥ २१ ॥

ज्योतिरसि वैश्वदेवम् ॥

ज्योतिरसि विश्वरूपमित्येतद्यजुर्विश्वदेवदेवतं । प्राजापत्यानुष्टुप् ॥ १६ ॥

पृषदाज्यग्रहणे विनियोगः ॥

त्वꣳ सोमक्रतुभिर्गायः सोमीं गायत्रीमनवसानाम् ।

त्वꣳ सोमेत्येतामृचं सोमदेवत्यां गायत्रीछन्दस्कामनवसानां अवसानरहितां भृगोः पुत्रः क्रतुः सप्तमत्र्पिरपश्यत् । मद्योमे यथोपरिहरणे विनियोगः । अत्र प्रथमः पादः सप्ताक्षरः द्वितीयो व्यूहेनाष्टाक्षर इत्येकोना । स्वाहाकारस्तु पृथग्यजुः ॥

जुषाणोऽअप्तुर्देवत्वैकपदा विराड्यजुरन्ता ।

ध्रुवासो अम् इत्येषां विराडेकपदा । इमामदेकपदेत्यर्थः । यजुरन्ते यस्याः सा यजुरन्ता । अस्या अन्ते स्वाहाकारो यजुः इष्यार्पणे द्वितीयाहुतिं होमे विनियोगः ॥

अग्ने नय आगस्त्यः आग्नेयी त्रिष्टुभम् ॥

अग्ने नय सुपथेतीमामृच अग्निर्देवता त्रिष्टुभं अगस्त्यऋषिरपश्यत् । अत्र तृतीयपादे व्यूहेनैकादशाक्षरपूरणं । वाचने विनियोगः ॥

अयं नस्त्रिष्टुप्यजुरन्ताऽऽग्नेयी ॥

अयं नोऽग्नि इत्येषा त्रिष्टुबग्निर्देवता । आग्नीध्रीये वैसर्जनहोमे विनियोगः, स्वाहाकारान्तं यजुः । व्यूहेनछन्दः पूर्तिः ॥

उरु विष्णो वैष्णव्यनुष्टुब्यजुरन्ता । ·

उरु विष्णो इत्यस्य विष्णुर्देवता अनुष्टुप्छन्दः । यजुरन्ता । स्वाहाकारान्ता । आहवनीये वैसर्जनहोमे विनियोग । व्यूहेन छन्दः पूरणम् ॥

देव सवितः सावित्रम् ॥

देव सवितरेतत्ते सोमइत्येतद्यजुः सवितृदेवतं गायत्रीछन्दः । हविर्धाने सोमनिधाने विनियोगः ॥

एतत्त्वं ऽ सौम्यम् ।

एतत्त्वं सोमेत्येतद्यजुः । सोमोदेवता प्राजापत्यात्रिष्टुप् । विसृष्टोपस्थाने विनियोग ॥

स्वाहा निर्लिङ्गोक्तदेवतम् ।

स्वाहा निर्वरुणस्येत्येत लिङ्गोक्तदेवतम् । यजुस्त्रिष्टुप् हविर्धानाभिक्रमणे विनियोग ।

अग्ने व्रतपा ऽआग्नेयम् ।

ग्रावा द्रावमसोपयपसज्ञकयूपस्य व.बैठा इविषतोमूगो निधाने विनियोगः ।

उपावीरस्तृणम् ।

उपावीरसीत्यस्य तृणं देवता दैवीपङ्क्तिः तृणादाने विनियोगः ।

उपदेवां स्त्रिष्टोक्तम् ।

उपदेवां देवीरित्येतद्यजुर्लिङ्गोक्तदैवतम् । पशवोदेवताः । त्वष्टा-रेत्यर्थः । एकान्नविंशदक्षरत्वादेकाधिका आर्षी पङ्क्तिः । एकोना प्राजापत्या जगती वा तृणेन पशुस्पर्शने विनियोगः ।

ऋतस्य त्वा पशुः ।

ऋतस्य त्वा देवहविरित्यस्य पशुर्देवता । आर्ष्युष्णिक् । पशोरन्त-रा शृङ्गबन्धने विनियोगः । (१)

अग्नीषोमाभ्यां त्रिष्टोक्तम् ।

अग्नीषोमाभ्यां जुष्टमित्येतद्यजुर्लिङ्गोक्तदैवतम् । अग्नीषोमदैवत-मित्यर्थः । यजुस्त्रिष्टुप् यूपे पशुबन्धने विनियोगः ।

अद्भ्योऽर्धा पशुः ।

अद्भ्यस्त्वौषधीभ्यः, अर्धा पेहरित्यनयोः पशुर्देवता । अद्भ्यः आ-र्षी पङ्क्तिः पशुप्रोक्षणे विनियोगः । अर्धा पेहः प्राजापत्या बृहती । आज्योपग्रहणे विनियोः ।

आपो देवीरापम् ॥

आपो देवी स्वदत्वित्येतदब्दैवतं । पशोरधस्तादुपोक्षणे विनियोग । आसुरी गायत्री ।

सन्ते पशुः ।

---

(१) देवस्य त्वेत्यस्य प्रजापतिः सविता देवता प्राजापत्या बृहती छन्दः. पशोर्यू-पे बन्धने विनियोग इति पद्धत्या. पाठोऽधिको बोध्यः ॥

हननमास्तीर्णां । रक्षोदैवते । निरस्त दैवीपङ्क्तिः । लोहिताक्तरण-
स्योत्करे प्रासने विनियोग. । इदमह । व्यूहेन प्राजापत्या जगती ।
यजमानस्य तृणाभितिष्ठाने विनियोगः ।

घृतेन द्यावापृथिव्यम् ।

घृतेन द्यावापृथिवीत्येतद्द्यावापृथिवीदेवतं । प्रोर्णने विनियु-
क्त।यजुर्जगती।

वायो वायव्यम् ॥

वायो वेरित्येतद्यजुर्वायुदैवत्यं । यजुर्गायत्री । आहवनीये तृणा-
प्रासने विनियोग. ।

अग्निराज्यस्याग्नेयम् ।

अग्निराज्यस्येत्येतदग्निदैवतं यजुर्बृहती । वपाभिघारणे विनि-
योगः ।

स्वाहाकृते वपाश्रपण्यौ ।

स्वाहाकृते ऊर्ध्वनभसमित्यस्य वपाश्रपण्यौ देवते । आसुरीगाय-
त्री । वपाश्रपण्योरनुप्रासने विनियोग. ।

इदमापऽआपो महापङ्क्तिः त्र्यवसाना । (१)

इदमापः प्रवहतेतीयमृगापो अस्य देवता । त्र्यवसाना त्रिषु
स्थानेष्ववसानं यस्याः सा त्र्यवसाना यस्या महापङ्क्तिश्छन्दः यस्याः
अष्टाक्षरा षड्द्वादशगापि महापङ्क्तिः, "षडष्टका वा महापङ्क्ति-
रित्युक्तत्वात् ॥ पावमान्यास्य पाद, इदमापइत्यस्यास्य पादः
पावमानसञ्ज्ञक. यजमानस्य मुखलिङ्गस्य मार्जने विनियोगइदमा-
पइत्यस्या. ।

सन्ते हृदयम् ।

---

कण्वसर्वानुक्रमेऽय पाठो नास्ति चात्राग्रे वक्ष्यते ॥

समुद्रं गच्छ स्वाहेत्यारभ्य मनो मे हार्दि यच्छेत्यन्तानि द्वादशयजूंषि लिङ्गोक्तदेवतानि । समुद्रान्तरिक्षादिदेवतानि । तेषां हविर्भीतत्वात् । आद्यानामेकादशानामनुयदाहोमे विनियोगः । मनोमइत्यस्य मुखविमार्जने । समुद्रं दैवीजगती । अन्तरिक्षं प्राजापत्यागायत्री । देवं यजुः पङ्क्तिः, मित्रावरुणौ यजुर्बृहती । अहोरात्रे प्राजापत्यागायत्री, छन्दांसि दैवीजगती । द्यावा । यजुर्बृहती । यज्ञं । यजुर्गायत्री । सोमं । यजुर्गायत्री, दिव्यं । प्राजापत्या गायत्री । अग्निं । यजुः पङ्क्तिः ।

मनो मे । दैवीजगती ।

## हिंस्रं स्वरुः ।

हिंस ते धूमइत्यस्य स्वरुर्देवता । परशुष्णिक् । स्वरुहोमे विनियोगः ।

## माऽपो हृदयशूलम् ।

माऽपो मौषधीरित्यस्य हृदयशूलं देवता यजुरुष्णिक् । यौतमूचोक्तायाः "शुगसि तमभिशोचि योऽस्मान्द्वेष्टि यं च वयं द्विष्म" इत्यस्याः । हृदयशूलदेवता । शुष्कार्द्रसन्धौ हृदयशूलोपगूहने विनियोगस्तयोः

## धाम्नोधाम्नो वारुणम् ।

साम्नबृहतीछन्दः धाम्नोधाम्नइत्येतद्यजुर्वरुणदेवतम् । साम्नोष्णिक् । हृदयशूलोपगूहनएव विनियोगः ।

## यदाऽऽहुर्वारुणी गायत्र्यनवसाना ।

यदाहुरघ्न्या इतीयमृक् । वरुणदेवत्या गायत्रीछन्दस्का अनवसाना । अवसानवर्जिता । अत्र प्रथमः सप्तपदः ततीयमेकोना । हृदयशूलोपगूहनएव विनियुक्ता ।

सुमित्रिया नऽआपम् ।(१)

सुमित्रिया नऽइत्येतद्यजुरब्देवतं । आसुर्यनुष्टुप् । अपामुपस्पर्शनेऽभिमन्त्रणे वा विनियुक्ता ।

ऋविप्रतोलिङ्गोक्तदेवताऽनुष्टुप् ।

इदं विप्रतीरिमाऽइतीयमृक् लिङ्गोक्तदेवता यथादृष्टदेवतेत्यर्थः। अन्त्या अनुष्टुप् छन्दः। वसतीवरीणां ग्रहणे विनियोगः।

अग्नेर्वैश्चत्वार्यापानि ।

अग्नेर्वोऽपन्नगृहस्येत्यादीनि चत्वारि यजूंष्यब्देवतानि अग्नेर्वोऽपन्नगृहस्य आसुरीगायत्री वसतीवरीणां शालाद्वार्यमपरेण निधाने विनियोग, इन्द्राग्न्योः प्राजापत्या गायत्री। दक्षिणस्यामुत्तरवेदिश्रोण्यां निधाने विनियोग, उत्तरश्रोणौ च। मित्रावरुणयोर्यजुस्त्रिष्टुप्। उत्तरस्यामुत्तरवेदिश्रोणौ वसतीवरीनिधाने विनियोगः विश्वेषां यजुस्त्रिष्टुप्। आग्नीध्रे वसतीवरीनिधाने विनियोगः।

अमूर्यापों गायत्रीं मेधातिथिः।

अमूर्याऽइतीमामब्देवतां गायत्रीछन्दस्कां मेधातिथि ऋषिरपश्यत्। इयं पादनिचृद्गायत्री। अयथाममपि पादानां समाक्षरत्वात्। "नव साप्ताः पादनिचृदिति वचनात्"। आग्नीध्रे वसतीवरीनिधानेयव विनियोगः॥

हृदे सौम्यनुष्टुप्॥

हृदे त्वा मनसे त्वेतीयमृक् सोमदेवत्यानुष्टुप्। व्यूहेन छन्दःपूर्तिः सोमोपाहरणे विनियोग.ः

सोम राजन्त्सौम्ये ।(२)

(१)इदमापऽआप्यन्ताम्। इति काण्वसर्वानुक्रमेऽधिकः पाठ.॥

(२)( हृदे त्वा सोम राजन्विश्वास्त्वा(?) सौम्यानि इति काण्वसर्वानुक्रमपाठ.॥

यदग्ने पृतिसंज्ञेतां अग्निदेवत्यां गायत्रीं मधुच्छन्दा ऋषिरपश्यत् । प्रवरणीयमहावीरहोमे तदभावे चतुर्गृहीतहोमे विनियोगोऽग्निष्टोमे । उक्थे प्रथमपरिध्यालम्भे । षोडशिनि रराट्यालम्भे । अतिरात्रे छदिरालम्भे । अष्टाक्षरः पादः । सप्ताक्षरः । तेनैकोना ।

आददे ग्रावा ।

आददे रावासीत्यस्य ग्रावा देवता । ग्रावादाने विनियोगः । आर्षीपङ्क्तिः ।

निग्राभ्यास्थापम् ।

निग्राभ्यास्थेत्येतद्यजुराद्यः । अब्देवत । व्यूहेन प्रकृतिश्छन्दः । निग्राभ्यासु वाचने विनियोग ।

इन्द्राय त्वा पञ्च सौम्यानि ।

इन्द्राय त्वा वसुमत इत्यादीनि पञ्चयजूंषि सोमदेवत्यानि । सोममाने विनियुक्तानि । इन्द्राय त्वा यजुर्जगती । द्वितीया यजुरनुष्टुप् । तृतीयापि सैव चतुर्थी यजुरनुष्टुप् । पञ्चमी यजुर्बृहती ।

यत्ते सोमी विपरीता बृहती ।

यत्ते सोम दिवीत्यृक् सोमदेवत्या । विपरीता बृहतीत्यस्याः प्रथमतृतीयौ पादावष्टाक्षरौ द्वितीयचतुर्थौ द्वादशाक्षरौ सा विपरीता बृहती । युजौ चेद्विपरीतेत्युक्ते, शिलालम्भने विनियोगः । व्यूहेनात्रैकाधिकं द्वादशाक्षरपूर्त्ति । तेनास्यै यजमानायेति तृतीयः पादः । उरुरायस्पोषादि चतुर्थो द्वादशाक्षरः ।

श्वात्राः पथ्याबृहती ।

श्वात्राः स्थ वृत्रतुर इत्यस्याः पथ्याबृहतीछन्दो निग्राभ्या देवताः

---

(१) यजुरातिथ्ये एक पाठ कण्वसंज्ञके ॥

निग्राभ्यासेके विनियोगः । यस्यास्तृतीयः पादो द्वादशाक्षरः अन्ये त्रयोऽष्टाक्षराः सा पथ्याबृहती, पथ्यापूर्वश्चेत्तृतीय इत्युक्तं, ताभ्यामधिकेयम् ।

माभेः सौम्यस्तदूर्ध्वं द्यावापृथिव्यमहं गृ ।

मा भेर्मा स मित्यस्यार्द्धं सोमदेवत्यम् । अर्द्धं द्यावापृथिवीदेवतम् अहं गृभ्णामीति प्रहरणे विनियोगः । ऋचां त्रिष्टुप् ।

प्रागपागुक्सौम्युष्णिक् ।

प्रागपागित्येषा ऋक्सौमी सोमदेवत्या उष्णिक्छन्दस्का निग्राभ्यायां विनियोगः । अष्टाविंशत्यक्षरेयमार्षी उष्णिक्पादानामनियताक्षरत्वात् ।

त्वमङ्ग गोतमऽऐन्द्री पथ्याबृहतीम् ॥२५॥

पथ्यापूर्वश्चेत्तृतीय इति । अत्र प्रथमद्वितीयौ समाक्षरौ तृतीयो द्वादशाक्षरः चतुर्थोऽष्टाक्षरः । तेन द्वाभ्यामूना बृहती ॥ निग्राभ्यावचनमेवास्या अपि विनियोगः ॥ २५ ॥

वाचस्पतये प्राणदेवत्या विराट् ॥ (१)

वाचस्पतय इत्येषा प्राणदेवत्या विराट्छन्दस्का । नव वैराजश्री दशैकैष्टकपेत्येषा नवटकपा विराट् । अत्र प्रथमः पादोऽष्टाक्षरः द्वितीयो दशाक्षरः । तृतीयस्त्रयोदशाक्षर इति । तेन एकोना उपांशुगृहस्य प्रथमद्वितीये गृहणे पूर्वोत्तरार्द्धयोः क्रमेण विनियोगः ॥

मधुमतीर्लिङ्गोक्तम् ।

मधुमतीरित्येतल्लिङ्गोक्तदेवतम् । पूर्वोक्त प्राणएवोपांशुग्रहरूपोऽस्य देवता । „प्राणो ह वा अस्योपांशुरिति श्रुतेः" । अत्र देवतमिति काण्वभाष्ये । यजुर्बृहती । उपांशुग्रहस्य तृतीये ग्रहणे विनियो-

(१) प्राणदेवत्वे एतावाति काण्वसर्वानुक्रमात् ॥

गः ।

यात्ते सौम्यम् ।

यत्ते सोमादाभ्यमित्येतत्सोमदैवतं । स्वराडुष्णिक् ॥ आदाभ्यांशूनां सोमे ग्रहेपि विनियोगः ।

स्वाङ्कृत यजुषी लिङ्गोक्ते ।

स्वाङ्कृतेति,उर्वन्तरिक्षमितीमे । यजुषी लिङ्गोक्तदैवते स्वाहाकारस्याग्निरिति वक्ष्यमाणत्वात्स्वाहाकारस्याग्निर्देवता । उर्वन्तरिक्षमिति रक्षोदेवतामिति प्रागुक्तं । स्वाङ्कृत इत्यस्यांशुक्षोदे उपांशौ विनियोगः ॥ उर्वन्तरिक्षमित्यस्य मार्जालत्यागयो लिङ्गोक्तविनियोगः ।

स्वाङ्कृतोऽस्युपांशुः ।

स्वाङ्कृतोऽसीत्यस्यांशुर्देवता । व्यूहेन द्वाविंशत्यक्षरा प्राजापत्या जगती । उपांशुग्रहहोमे विनियोगः ।

देवेभ्यस्त्वा दैवम् ।

देवेभ्यस्त्वा मरीचिपेभ्य इत्येतद्देवदैवतं पार्थिवपांसुग्रहणे विनियुक्तम् । यजुर्बृहती ।

देवांशो लिङ्गोक्तमाभिचारिकम् ।

देवांशो यस्मै त्वेडेत इत्येतल्लिङ्गोक्तदैवतं । सोमांशुर्देवता गत्यर्थः । तथा आभिचारिकं । अभिचारसाधकमिदं यजुः साम्नी त्रिष्टुप् । वागदरोत्ताहुषु क्षिप्तानां सोमांशूनां होमे विनियोगः ।

प्राणाय ग्रह ।

प्राणाय त्वेत्यस्य ग्रहो देवता । दैवी बृहती । उपांशुपात्रसादने विनियोगः ।

व्यानायोपांशुसवनः ।

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M.A.

AND

G. THIBAUT, Ph.D.

No. 17

महर्षिकात्यायनप्रणीतम् शुक्लयजुःसर्वानुक्रमसूत्रम्।

याज्ञिकानन्तदेवविरचितभाष्यसहितम्।

श्रीकाशिकराजकीयप्रधानपाठशालाधीशविदुषेन श्रीमिथिला

धीमतो मध्यवैदुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनस

स्थापितवेदविद्यालयप्रधानाध्यापकेन च पाठको

पाह्वश्रीमद्युगलकिशोरशर्मणा निर्मितया सर्व

शुक्लकीर्तिप्रकाशाख्यटिप्पण्या समेतम्॥

# KÁTYÁYANA'S SARVANUKRAMASUTRAS OF THE WHITE YAJUR VEDA,

WITH THE COMMENTARY OF YÁJÑIKÁNANTADEVA.

EDITED AND ANNOTATED BY PANDIT YUGALAKISHORA PATHAKA

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE

Fasciculus II.

*BENARES*

PRINTED AND PUBLISHED BY

MESSRS. BRAJ B. DAS & CO.

AT THE BENARES PRINTING PRESS

1893

व्यानाय त्वेत्यस्योपांशुसवनो देवता । दैवीबृहती उपांशुसवनासादने विनियोगः ।

**उपयामगृहीतोऽस्यन्तरैन्द्रम् ।**

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्नित्यैन्द्रमिन्द्रदेवत्यं । प्राजापत्या त्रिष्टुप् । अन्तर्यामग्रहणे विनियोगः ।

**अन्तस्ते मघवद्दैवत्या त्रिष्टुबुदानाय ग्रहः ।**

अन्तस्ते द्यावापृथिवीतीयमृक् मघवद्दैवत्या त्रिष्टुप्छन्दस्का अन्तर्यामग्रहणे विनियोगः द्वितीयपादे व्यूहेनाक्षरपूरणम् । उदानाय ग्रहः । उदानाय त्वेत्यस्य ग्रहो देवता दैवीपङ्क्तिः अन्तर्यामपात्रासादने विनियोगः ।

**आ वायो वसिष्ठो वायव्यां त्रिष्टुभम् ।**

आ वायो भूषेतीमामृचं वायुदेवत्यां त्रिष्टुभं वसिष्ठोऽपश्यत् । ऐन्द्रवायवग्रहणे विनियोगः ।
तृतीयो दशाक्षरः । तेनैकोना । वायवे त्वेति यजुः दैवीबृहती । ऐन्द्रवायवग्रहणे विनियोगः ।

**इन्द्रवायू मधुच्छन्दा ऐन्द्रवायवीं गायत्रीम् ।**

इन्द्रवायू इमे इतीमामृचमिन्द्रवायुदेवत्यां गायत्रीछन्दस्कां मधुच्छन्दा ऋषिरपश्यत् । उपयामगृहीतस्तेत्यजुः व्यूहेन ऋग्गायत्री । अपगृह्य पुनरैन्द्रवायवग्रहणे विनियोगः । अन्त्ये एष ते योनिरिति यजुः पङ्क्तिः । ग्रहासादने विनियोगः ।

**अयं वां गृत्समदो मैत्रावरुणीम् ।**

गायत्रीमित्यत्रानुवर्तते । अयं वां मित्रावरुणेतीमामृचं मित्रावरुणदेवतां गायत्रीछन्दस्कां गृत्समद ऋषिरपश्यत् अन्त्ये यजुरासुरी गायत्री । मैत्रावरुणग्रहणे विनियोगः ॥

सा प्रथमैन्द्री त्रिष्टुप् ॥

सा प्रथमा सस्तुतिरितीयमृक् इन्द्रदैवत्या त्रिष्टुप् । शुक्रामन्थिहोमे विनियुक्ता ।

त्वम्पन्त्वयाऽग्नी स्त्रिङ्गोक्ते ॥

त्वम्पत् होता ॥ पयाऽग्नीरित्येते यजुषी । लिङ्गोक्तदेवते । प्रथमस्य होता देवता । द्वितीयस्य होता । तं प्रति कथनात् । नु वत्सु प्राजाप त्यावृहती । जपे विनियोग ॥

पयाड्दैवी वृहती ॥

होतरपे वृषारवे विनियोगः ॥ २६ ॥

अयँश्वेनो वेनस्य त्रिष्टुप् सोमस्तुतिरधिदैवतमधियज्ञं च ॥

अय वेनइतीयमृक त्रिष्टुपवेनस्य वेनो वेनतेः कान्तिकर्मणस्तिया स्तात्वेनोऽयं चन्द्र सोम । स वेनोऽस्या ऋचो देवता । कीदृशी इयमृक । अधिदैवतं अधियज्ञ च सोमस्तुति अनया त्रिष्टुभा अय वेन इत्यनया अधिदैवतमधियज्ञं चावस्थित सोम स्तूयते । अधिदैव तावच्चन्द्रात्मना स्तूयते । अधियज्ञ च यागसाधनभूतसोमा त्मना तृतीय पादोऽत्र द्रष्टव्य तेनैकाग्रमन्थिपक्षेपि विनियोग शुक्रपक्षेऽपि विकल्पेन विनियोगोऽस्ति अयं वेन इत्येकहृति ॥

मनो न त्रिष्टुप्सोमस्तुतिरधियज्ञानुवादिनी ॥

मनो न येष्विती यस्यक त्रिष्टुप् । कीदृशी । अधियज्ञानुवादिनी शुक्रामन्थिपदस्याधियज्ञानुवादिनी । सामस्तुतिसोमोऽस्य देवता इत्य र्थं सक्तुभिर्मन्थिश्रयणे विनियोग ॥

आ त्मिष्ट अंडोऽपस्त्वो मर्कऽपाभिचारिके ॥

इमे यजुषी अभिचारप्रयोजने । अनयोरासुरीगायत्रीछन्दः । शुक्रामन्थिनोरपमार्जने विनियोगः ॥

## देवास्त्वा शुक्रामन्थिनौ ॥

*देवास्त्वा शुक्रपाः, देवास्त्वा मन्थिपा इत्यनयोः क्रमेण शुक्रामन्थिनौ* देवते । हविर्धानानिष्क्रमणे विनियोगः यजुः पङ्क्तिः ॥

## अनाधृष्टाऽसि-इति द्वावुत्तरवेदिश्रोण्यौ ॥

अनाधृष्टासीत्यनयोर्द्वयोर्मन्त्रयोः उत्तरवेदिश्रोण्यौ देवते । उत्तरवेदिश्रोण्योर्म्हासादने विनियोगः ॥

## सुवीरः सुप्रजा इत्यनयोः शुक्रामन्थिनौ ॥

यथाक्रमं देवते । सुवीर इत्यस्य शुक्रो देवतासं अनिष्टुप् । अध्वर्यो र्दक्षिणं यूपदेशं प्रतिगमने विनियोगः । सुप्रजा इत्यस्य मन्थीदेवता । साम्न्यनुष्टुप् । प्रतिप्रस्थातुरुत्तर यूपदेशं प्रतिगमने विनियोगः ॥

## निरस्तौ द्वे आभिचारिके ॥

निरस्तः शण्डो निरस्तो मर्क इतीमे यजुषी आभिचारिके अभिचारप्रयोजने दैवीपङ्क्तिः । अप्रोक्षितयूपशकलयोर्निरसने विनियोगः ॥

## शुक्रस्य मन्थिनः शकल(१)म् ॥

शुक्रस्याधिष्ठानमसि मन्थिनोधिष्ठानमसीत्यनयोः शकलं देवता । प्राजापत्या गायत्री । प्रोक्षितयूपशकलयोराहवनीये प्रासने विनियोगः ॥

## ये देवासः पञ्चर्चो वैश्वदेवीर् विष्टुभम् ॥

ये देवासो दिव्येकादशस्थ विश्वे देवदेवता त्रिष्टुप्छन्दस्का पञ्चर्चो पश्चात्परप्रयत् ॥

---

(१) "शुक्रस्य मन्थिनो द्वयोः शकलं" इति काण्वशाखीयसर्वानुक्रमसूत्रे ड. ॥

आग्रयणोऽसि लिङ्गोक्तदेवतम् ॥

आग्रयणदेवतमित्यर्थः । ऋषिर्न साम्नी अनुष्टुप् । आग्रयणग्रहग्रहणे विनियोगः ॥ २० ॥(१)

सोमः पवते वैश्वदेवम् ॥

सोम पवत इत्येतद्विश्वदेवदैवतं । अत्यष्टिश्छन्दः । दशापवित्रेणाग्रयणमुपगृह्य निर्हिङ्कृत्य पश्चादुत्सारणे विनियोगः । एष त इति यजुर्जगती । सादने विनियोग ॥

इन्द्राय त्वा लिङ्गोक्तानि ॥

इन्द्राय त्वा बृहद्वत इत्यादीनि इन्द्राविष्णुभ्यामित्येतत्पर्यन्तानि सर्वाणि यजूंषि लिङ्गोक्तदेवतानि । गृह्यमाणग्रहदेवतानीत्यर्थः । सर्वेन्द्राय त्वेति पार्षीपङ्क्तिः उक्थ्यग्रहणे विनियोगः । एष त इति यजुर्बृहती सादने विनियोगः । यज्ञो देवता । देवेभ्यस्त्वेति यज्ञो देवता । आसुरी गायत्री । प्रातः सवने उक्थ्यविग्रहणे विनियोगः मित्रावरुणाभ्यां त्वा । साम्नी गायत्री मैत्रावरुणस्योक्थ्यविग्रहणे विनियोगः । इन्द्राय त्वा । आसुरी गायत्री । ब्राह्मणाच्छंसिन उक्थ्य विग्रहणे विनियोगः इन्द्राग्निभ्यां त्वा । प्राजापत्यानुष्टुप् । अच्छावाकोक्थ्यविग्रहणे विनियोगः इन्द्रावरुणाभ्यां । साम्नी गायत्री । इन्द्राबृहस्पतिभ्यां त्वा । एकाधिका साम्नी गायत्री । इन्द्राविष्णुभ्यां त्वा एकोना साम्नी गायत्री । तृतीयसवने उक्थ्यविग्रहणे प्रातः सवनोक्तक्रमेण विनियोग ॥

मूर्द्धानं भरद्वाजो वैश्वानरीं त्रिष्टुभम् ॥

मूर्द्धानं दिव इतीमामृचं वैश्वानरदेवतां त्रिष्टुप्छन्दस्कां भरद्वाजऋषिरपश्यत् । ध्रुवग्रहणेऽस्या विनियोगः ॥

---

(१) स्वाग्रयण इत्येतद्यजुरित्येतत्क्वचित्-मूलीयपाठः सटीकपुस्तके ॥

ध्रुवो ऽसि ध्रुवः ॥

ध्रुवोऽसि ध्रुवक्षितिरित्यस्या । ध्रुवो देवता । एकाधिका त्रपः प-ङ्क्तिर्ध्रुवग्रहणेएव विनियोग. ॥

ध्रुवं ध्रुवेण बृहती पूर्वोऽर्द्धर्चो ध्रौव उत्तरऐन्द्रः ॥

ध्रुवं ध्रुवेणेत्यस्या बृहतीछन्दः । तत्र ध्रुवं ध्रुवेणेत्ययं पूर्वोऽर्द्धर्चो ध्रौवः ध्रुवदैवतः । मनसाऽऽदत्यत्युत्तरोऽर्द्धर्च ऐन्द्रदैवत । ध्रुवस्य होतृचमसेऽवनयने विनियोगः । (१)अत्र प्रथमतृतीयावष्टाक्षरौ पादौ । द्वितीयचतुर्थौ दशाक्षरौ । षट्त्रिंशदक्षरत्वाद्बृहती "वैराजो गायत्रो चेति पिङ्गलोक्ता" । अत्र पादक्रमनियमा न भवन्ति षट्टि-शोर्मध्येद्गको विष्टारबृहतीत्येतल्लक्षणमिह नास्ति ॥(२)

यस्ते देवयशः सोमो त्रिष्टुभंयजुरन्ताम् ॥

यस्ते द्रप्स इतीमां त्रिष्टुभं सोमदेवतां यजुरन्तां देवयवाख्यऋषि-रपश्यत् । यजुषोऽपि देवयवाख्यऋषिरित्यर्थः । स्वाहेत्येतद्यजुश्चतुर्थः पादो द्वादशाक्षर तेनैकाधिका । विप्रुड्ढोमेऽस्या विनियोगः ॥

देवानां चात्वालदैवतम् ॥

देवानामसीत्येतद्यजुश्चात्वालदैवतं । यजुर्बृहती । तथस्य चात्वाले प्रक्षेपे विनियोगः ॥

प्राणाय मे लिङ्गोक्तदैवतान्येकादश ॥

प्राणाय मे वर्चोदा इत्यादीनि विश्वाभ्यो मद्भ्य इत्यन्तान्येकादश यजूंषि लिङ्गोक्तदैवतानि । उपांशुसवनादय एषां देवता इत्यर्थः । सर्वेषां मावने विनियोग. । तत्र प्राणाय मह्यमुपांशुर्देवता आसुर्यनुष्टुप्-

(१) उ० ध्रुवोऽसि ध्रु० ध्रुवो दे० एकाधिक ध्रुवग्रहण एवावि० एव ते म० म-हेन्द्रे० यजुरितिपसादने वि० ।

(२) ध्रुवसक्के विनि० इत्युभयो. पद्धतिपाठः ॥

वाचने विनियोगः, व्यानाय मे । उपांशुसवनो देवता आसुर्यनुष्टुप् । उदानाय मे अन्तर्यामो देवता साम्न्युष्णिक् । वाचे मे ऐन्द्रवायवो देवता । साम्नीगायत्री, क्रतूदक्षाभ्यां । मैत्रावरुणग्रहो देवता आसुरीगायत्री । श्रोत्राय मे आसुर्यनुष्टुप् आश्विनग्रहो देवता । चक्षुर्भ्यां मे शुक्रामन्थिनौ देवते । साम्न्युष्णिक् । आत्मने मे । आग्रयणो देवता । आसुर्यनुष्टुप् । ओजसे मे । उक्थ्यो देवता । आसुर्यनुष्टुप् । आयुषे मे । ध्रुवो देवता आसुर्यनुष्टुप् । विश्वाभ्यो मे । एकोनागायत्री । एकाधिका वा प्राजापत्यानुष्टुप् । पूतभृदाधवनीयौ देवते । सर्वेषां वाचने विनियोगः ॥

## कोऽसि प्राजापत्योष्णिग्वर्द्धमाना ॥

कोऽसिकतमोऽसीत्येषा प्राजापतिदेवता । अध्यात्मपक्षेतिरूपो द्रोणकलशोऽत्र देवतेत्यर्थः, मध्या वर्द्धमानोष्णिक्छन्दः यस्य प्रथमः पादः षडक्षरः । द्वितीयः सप्ताक्षरः । तृतीयोऽष्टाक्षरः । सा त्रिंशदक्षरत्वात् द्वाभ्यामधिकत्वात् । वर्द्धमानोष्णिगित्युच्यते । ग्रहग्रहणवाचने विनियोगः । भूर्भुवः स्वरिति ककुबुष्णिक् यजमानस्य जपे विनियोगः ॥

## मधवे त्वा त्रिंशोक्तदेवतानि त्रयोदश ॥

मधवे त्वेत्यादीनि अर्द्धऋक्सत्त्वये त्रिंशतानि त्रयोदश यजूंषि लिङ्गोक्तदेवतानि गृहगृहगमावागृहदेवतानीत्यर्थः । ऋतुगृहग्रहणे सर्वेषां विनियोगः । मधवे त्वा यजुर्जगती । माधवाय । आसुर्यनुष्टुप् । शुक्राय शुचये । नभसे त्वा । यजुर्जगत्य, नभस्याय आसुर्यनुष्टुप् । इषे त्वा । ऊर्जे त्वा यजुः पङ्क्तिः । सहसे त्वा तपसे त्वा यजुर्जगत्यौ, सहस्याय त्वा तपस्याय त्वा आसुर्यानुष्टुभौ । अर्द्ध० ऋचः साम्न्युष्णिक् ॥ २० ॥

## इन्द्राग्नी विश्वामित्रऐन्द्राग्नी गायत्रीम् ॥



महावदखतीयग्रहणे। अथ द्वितीया टयाचर ऋग्भिन पूर्वितो एको ना वा। उपयामेति आसुरी गायत्री, एष सहत्वासुर्यनुष्टुप्। एव चतसृष्वपि। तृतीयाचतुर्थ्योरपि लिङ्गामहत्तृतीयगृहणएव विनियो गो वाचस्तोमे॥

महता त्वा यजुर्महत्वतीयम्॥

महतां त्वोजसइति यजुर्महत्वतीय महत्वानस्य देवतेत्यर्थं, द्या वापृथिवी महत्वद्दनीयोमेति वषट्‌चय अथ सामाधिकाम्। तृतीयमह त्वतीयस्य ग्रहणे विनियोग॥

महा २॥ इन्द्रो भरद्वाजो माहेन्द्रो त्रिष्टुभम्॥

महा २॥ इन्द्रा नृवदितीमामृच माहेन्द्रगृहदेवता त्रिष्टुपछन्दस्का भरद्वाजऋषिरपश्यत्। माहेन्द्रगृहगृहणे विनियोग। अथ तृतीयो मवाचर। तत्र द्वयूनः॥

यऽश्रोजसा वत्सो गायत्रीम्॥

माहेन्द्रीमित्यनुवर्तते। महां २। इन्द्रो यऽश्रोजसेतीमामृच महेन्द्र देवता गायत्रछन्दस्का वत्सऋषिरपश्यत्। अस्यापि माहेन्द्रगृहणएव क द्दाचिद् विनियोग लिङ्गात्। अभोभयासंत्वयोरुपयामेत्यासुर्यनुष्टुप्। एष तदति यजु भक्तिम गृहणासादनयोर्विनियोग॥

उदुत्य प्रस्कण्व सौरी गायत्रीम्॥

उदुत्यमितीमा सूर्यदेवता गायत्रीछन्दस्का प्रस्कण्वऋषिरपश्यत्। दाचिणहोमे विनियोग अथ तृतीय सताचर तेनैकोना॥

चित्रं कुत्स आङ्गिरसस्त्रिष्टुभम्॥

सौरीमित्यनुवर्तते। चित्र देवानामितीमामृच सूर्यदेवता त्रि ष्टुपछन्दस्का आङ्गिरस पुत्र कुत्सऋषिरपश्यत्। दाचिणहोमेऽस्या

विनियोगः ॥(१)

**रूपेण वो दक्षिणा श्चतुर्णाम् ॥**

रूपेण वो रूपमित्यादीनां चतुर्णां यजुषां दक्षिणादेवता । तत्र रूपेण वः प्राजापत्या जगती नष्टरूपानुष्टुप् । दक्षिणाभिमन्त्रणे विनियोगः, वि स्व देवीजगती सदोगमने विनियोगः, यमस्य यजु गायत्री सदस्य प्रेक्षणे । अत्र चस्तस्य यथा प्रेतेति द्वितीयं यजुः पृथक् । चतुर्णामित्युक्तत्वात् ॥

**ब्राह्मणमद्य लिङ्गोक्तदेवतान्यष्टौ ॥**

ब्राह्मणमद्य विदेयमित्यादीन्यष्टौ यजूंषि लिङ्गोक्तदेवतानि ब्राह्मणो देवता ब्राह्मण इतिएकोनाष्टवृहती आग्नीध्रमार्गे पञ्च प्रतिगमने विनियोगः अस्मद्राताद इत दक्षिणादेवताः । सगायत्री दक्षिणादाने विनियोगः ॥

**अग्नये त्वा हिरण्यं देवता ॥**

आर्षी त्रिष्टुप् हिरण्यप्रतिग्रहे विनियोगः ॥

**रुद्राय त्वा गौर्देवता ॥**

एकाधिका आर्षी त्रिष्टुप् गोः प्रतिग्रहे विनियोगः । बृहस्पतये त्वा एकोनाप्राजापत्या गायत्री वासोदेवता वासः प्रतिग्रहणे विनियोगः ॥

**यमाय त्वा ॥**

अश्वोदेवता एकाधिकार्षी त्रिष्टुप् । अश्वप्रतिग्रहणे विनियोगः ॥

**कोऽदादिति कामो देवता ॥**

---

(१) अत्र अग्नेर्यापमत्याति इयोश्चोरगहत्य आर्षी त्रिष्टुप्छन्दसी आग्नीध्रेऽग्नी कृताहुतिस्थपशमे विनियोग इति पद्धतिपाठः ॥

प्राजापत्या त्रिष्टुप् हिरण्यगोवासोऽश्वेऽभ्योऽम्भस्य दधिपामा-
त्रस्य मन्त्रोदेनादेः प्रतिगृहे विनियोगः । कोदादित्यस्य द्वे पदहे
पृथग्यजुषी अभिप्रेत्य लिङ्गोक्तदेवतान्यष्टाविशुक्त । अन्यथा सप्तैवे-
मानि नाष्टौ ॥ २१ ॥

विष्णो वैष्णवम् ॥

विष्णऽउरुगायैषमहस्येतद्यजुर्वैष्णवं विष्णुर्देवता आर्षीगायत्री ।
आदित्यस्याग्रयणानां द्विदेवत्यानुहोमसंस्रवाणामादित्यपात्रे-
ण पिधाने विनियोग । अथ प्रथममध्यायादौ उपयामगृहीतोऽ-
सीति प्रथमं यजुः । प्राजापत्या गायत्री । द्विदेवत्यैः सह होमार्थं प्र-
तिप्रस्थातुरादित्यपात्रेण द्रोणकलशादुपहरणे विनियोगः ॥

गृह्यमाणाः सोमोदेवता ॥

अथ आदित्येभ्यस्त्वेति द्वितीयं यजु आदित्यस्थाल्यां संस्रवासेके
विनियुक्तं । तस्यासिंचमानः सोमोदेवता दैवीपङ्क्तिश्छन्द संस्रवासे-
के विनियोगः । ततस्तृतीयं विष्णऽउरुगायेति ॥

कदा चनादित्यदेवत्ये बृहत्यौ ॥

कदा चन स्तरीः, कदा चन प्रयुच्छसीतीमे ऋचौ आदित्यदेवते बृ-
हतीछन्दसी आदित्यग्रहणे विनियुक्ते द्वे अपि यजुरन्ते । आदित्ये-
भ्यस्त्वेति ह्यारभ्यन्ते यजुः । तस्य दैवीपङ्क्तिश्छन्द. पूर्वं हि आसमोप-
स्थाने मध्ये कदाच नेन्द्रदेवत्योक्ता । इह त्वादित्यदेवत्या यजुरन्ता-
श्चेति विशेषः द्वितीयायां व्यूहेन छन्दः पूर्त्ति ॥

यज्ञो देवानां कुत्सस्त्रिष्टुभम् ॥

यज्ञो देवानामितीयमादित्यदेवत्या त्रिष्टुभं कुत्सऋषिरपश्यत् ।
आदित्यग्रहस्य दध्ना श्रपणे विनियोगः । अत्र प्रथमतृतीयौ पादौ द-
श च्छे । ततश्च तयोर्व्यूहेन पूरणम् ।

विवस्वन्यजुः ॥

मादित्यदेवत्यमित्यनुवर्त्तते । विवस्वन्नादित्यैषेत्ययजुरादित्यदेवतम् । दधिसोमयोर्मिश्रणे विनियुक्तम् । प्राजापत्यानुष्टुप् ॥

यदस्मै जगत्याशीः ॥

यदस्मै नरइत्येषा जगतीछन्दस्का आशीर्देवता । नरोदेवता वा तेषां सम्बोध्यत्वेनात्र प्राधान्यात् । पत्न्या आशीरावेक्षणे विनियुक्ता व्यूहेन पूर्त्तिः ॥

वाममद्य भरद्वाजो बार्हस्पत्यः सावित्री त्रिष्टुभम् ॥

वाममद्येतीमामृचं सवितृदेवत्यां त्रिष्टुप्छन्दस्कां बृहस्पतेरपत्यं भरद्वाजऋषिरपश्यत् । अत्र चतुर्थो दशाक्षरः । सैकोना ॥

सावित्रोऽसि माविवम् ।

सावित्रोऽसीत्येतद्यजुःसवितृदेवतम् । सावित्रग्रहणएव विनियुक्तम् । साम्न्यामधिका आर्षीत्रिष्टुप् द्व्यूनाआर्षी जगती वा ॥

सुशर्मासि वैश्वदेवम् ॥

सुशर्मासि सुप्रतिष्ठानइत्येतद्यजुर्वैश्वदेवदेवतम् । व्यूहेन प्राजापत्या जगती । वैश्वदेवग्रहणे विनियोग ॥

बृहस्पतिसुतस्य लिङ्गोक्तम् ॥

बृहस्पतिसुतस्येत्येतल्लिङ्गोक्तदेवतम् । सोमदेवतमित्यर्थः । प्राश्नीगाय्त्री पात्नीवतग्रहग्रहणे विनियोग ॥

अहम् (१)प्रजापतिरूपेणात्मा देवता त्रिष्टुप् ॥

अहम् परस्तादित्यस्याक्षरः प्रजापतिरूपेण आत्मादेवता त्रिष्टुप्छन्दः । पात्नीवतग्रहस्य प्रचरणीशेषेणाध्येन भक्षणे विनियोगः ।

---

(१) परस्तादित्यनेकेन पाठ काण्वः संगृहीते बोध्य ॥

धाने विनियुक्तानि ॥

देवकृतस्यासुर्यनुष्टुप् ॥

मनुष्यकृतस्य साम्न्युष्णिक् । पितृकृतस्यासुर्यनुष्टुप् । आत्मकृतस्यासुर्यनुष्टुप् ॥

एनसो यजुर्जगती ॥

यच्चाहमेनः । स्वाहेति प्राजापत्या त्रिष्टुप् ॥

समवर्चसेत्यस्य त्वष्टादेवता त्रिष्टुप् ॥

षट्कं पूर्ववदवभृथगमने विनियोगः । छन्दोदेवतयोः प्रागुक्तत्वादिह नोक्तम् ॥ ३० ॥

समिन्द्राग्निर्वैश्वदेवी त्रिष्टुभम् ॥

समिन्द्र णो मनसेतीमामृचं विश्वदेवदेवतां त्रिष्टुप्छन्दस्कां पविरृषिरपश्यत् । समिष्टयजुर्होमे विनियोगः । संवर्चसेत्यस्योत्तमस्य प्रजापतिर्ऋषिः समिष्टयजुर्होमे विनियोगः ॥

धाता लिङ्गोक्तबहुदेवत्या ॥

त्रिष्टुप्पदमनुवर्तते । धाता रातिरित्येषा त्रिष्टुप् लिङ्गोक्तबहुदेवत्या लिङ्गोक्ता लिङ्गेनैव मन्त्राक्षरेणोक्ता बह्व्यो देवता यस्याः सा तथा धातृसवितृप्रजापतिदेवाग्नित्वष्टृविष्णुदेवत्येत्यर्थः । समिष्टयजुर्होमे विनियोगः ॥

सुगा वो देवा ॥

सुगा वो देवा इतीयमृग्दैवी देवता । अत्रापि त्रिष्टुबित्यनुवर्तते । समिष्टयजुर्होमे विनियोगः । अत्र चतुर्थो द्वादशाक्षरस्तेनैकादशा ॥

यं । २८ ॥ यावतो वयमाग्नेय्यौ ॥

त्रिष्टुभावित्यत्र सम्बध्यते । यं २ ॥ यावत उपसः, अयट० इत्यत्र प्रतीतामि ऋचौ आग्नेय्यौ अग्निदेवते त्रिष्टुप्छन्दस्के । समिष्टय-

जुहोमि विनियुक्तो देवा गातुविदस्य तु सर्वं प्रागुक्तम्। अत्र पुनः पाठात्प्रजापतिर्वा ऋषिरिति विशेषः ॥

## यज्ञ यज्ञमेषते लिङ्गोक्ते यजुषी ॥

यज्ञ यज्ञं गच्छ, एष ते यज्ञ इतीमे यजुषी लिङ्गोक्ते प्रथमं यज्ञदैवतं एकाधिका ब्राह्मी गायत्री। द्वितीयं यज्ञपतिदैवतं। एकाधिका साम्नी जगती। समिष्टयजुर्होमे द्वयोर्विनियोगः ॥

## उरुꣳ० हि शुनःशेपो वारुणी त्रिष्टुभम् ॥

उरुꣳ० हि राजेत्यस्य वरुणदैवताम्। त्रिष्टुप्छन्दस्कां शुनःशेपऋषिरपश्यत्। वाचने विनियोगः। द्वितीयपादस्य व्यूहेन पूरणम् ॥

## नमो वरुणाय ॥

नमो वरुणायेत्येतद्यजुर्वारुणं वरुणदैवतं पर्योऽयक्रमेऽपि वाचने विनियोगः ॥

## अग्नेरनीकमाग्नेयी त्रिष्टुप् ॥

आसुरी गायत्री ॥

अग्नेरनीकमित्येषा ऋगग्निदेवता त्रिष्टुप्छन्दस्का अप्सु चतुर्गृहीतहोमे विनियुक्ता। तृतीयस्याश्च व्यूहेन पूरणम् ॥

## समुद्रे ते सौमी विराट् ॥

समुद्रे ते हृदयमित्येषा ऋक् सौमी सोमदेवत्या विराट्छन्दस्का। यस्या दशाक्षराश्चत्वारः पादाः सा विराट्। वैराजैर्विराडिति वचनात्। ऋजीषकुम्भप्लावने विनियोगः ॥

## देवीरापः पङ्क्तिर्बृहती वा पूर्वार्धर्च आपउत्तरः ॥

देवीराप एष वो गर्भ इतीयमृक्पङ्क्तिच्छन्दस्का बृहतीच्छन्दस्का वा अष्टाविंशदक्षरत्वाद्विकल्पः। अस्याः पूर्वार्धर्चः अब्देवतः उत्तरो-

दंषां देव सोमैयत इत्ययं सोमदेवतः । ऋजीषकुम्भस्य विसृष्टी पस्याने विनियोगः ॥

## देवानामाग्नेयम् ॥

देवानाम्  समिदसीत्येतद्यजुरग्निदेवत । समिदाधाने विनियुक्तम् । दैवीजगती ॥

## एजतु त्र्यवसाना महापङ्क्तिः ॥

एजतुदशमास्यइतीयमृक् त्र्यवसाना अवसानत्रयोपेता महापङ्क्तिछन्दस्का । गर्भो देवता । मन्त्रलिङ्गात् । यस्याष्टाक्षराः षट्पादाः सा महापङ्क्ति "षडष्टका वा महापङ्क्तिरित्युक्तेः" अनूबंध्यायागर्भस्य नि ष्क्रममाणस्याभिमन्त्रणे विनियोगः ॥

## यस्यैते वशा ॥

यस्यैतेऽयज्ञियइत्यस्या ऋचः वशादेवता । अनुष्टुप्छन्दः । मैत्रहोमे विनियोगः ॥

## पुरुदस्मो गर्भः ॥

पुरुदस्मो विषुरूप इत्यस्या गर्भो देवता । ब्राह्मी अनुष्टुप् । गर्भमेधस्य स्विष्टकृतमनुमेधहोमे विनियोगः ॥

## मरुतो यस्य गोतमो मारुतीं गायत्रीम् ॥

मरुतो यस्येतीमामृचं मरुद्देवत्यां गायत्रीं गोतमऋषिरपश्यत् । शामित्रे गर्भहोमे विनियोगः ॥

## मह्यौर्मेधातिथिर्द्यावापृथिव्याम् ॥

गायत्रीमित्यनुवर्त्तते । मही द्यौरितीमामृचं गायत्रीछन्दस्कां

(१) निष्क्रमागतस्य गर्भस्याभिमन्त्रणे विनियोगः । इति पद्धत्याः पाठो वेध्यः ॥

द्यावापृथिवीदैवत्यां मेधातिथिऋषिरपश्यत् । गर्भस्त्वागारैरभ्यूहने विनियोगः । इत्यग्निष्टोमः । इतिशब्दः समाप्तौ । अग्निष्टोमः समाप्त इत्यर्थः ॥ ३१ ॥

अथ षोडशी व्याख्यास्यत इति शेषः । षोडशिनामसत्वा लक्ष्यन्ते । अथानन्तरं षोडशिमन्त्राणामृष्यादिकं व्याख्यास्यत इत्यर्थः ॥

## आतिष्ठ गौतम ऐन्द्रीमनुष्टुभम् ॥

आतिष्ठ वृत्रहन्नित्येतामृचं इन्द्रदैवत्यामनुष्टुप्छन्दस्कां गौतमऋषिरपश्यत् । अर्वाञ्चपात्रेत्यासुरीगायत्री । षोडशीग्रहणे विनियोगः एष तद्व्यासुर्य्यनुष्टुप् । सादने विनियोगः ॥

## युक्ष्वा हि मधुच्छन्दाः ॥

ऐन्द्रीमनुष्टुभमित्यनुवर्तते । युक्ष्वा हि केशिनेत्येतामृचं इन्द्रदैवत्यामनुष्टुप्छन्दस्कां मधुच्छन्दा ऋषिरपश्यत् । विकल्पेन वा युक्ष्वा हि केशिनेत्येतामृचमिन्द्रदैवत्यामनुष्टुप्छन्दस्कां मधुच्छन्दा ऋषिरपश्यत् । विकल्पेन षोडशीग्रहणएवविनियोगः अत्र द्वितीयः पक्षान्तरः । तेन द्व्यूना । यजुषः पूर्ववत् ॥

## इन्द्रमिद्गौतमः ॥

ऐन्द्रीमनुष्टुभमित्यनुवर्तते । इन्द्रमिद्धरी वहत इत्येतामृचमिन्द्रदैवत्यामनुष्टुभमित्यनुवर्तते । इन्द्रमिद्धरी वहत इत्येतामृचमिन्द्रदैवत्यामनुष्टुप्छन्दस्कां गौतमऋषिरपश्यत् । अस्या अपि षोडशीग्रहणएव विकल्पेन विनियोगः । यजुषः पूर्ववत् । अत्र चतुर्थः समाप्तः । तेनैकोना ॥

## यस्मान्नैन्द्रो त्रिष्टुप्परब्रह्मरूपेण षोडशिनः स्तुतिः ॥

यस्मान्न जात इत्येतामृचमिन्द्रदैवत्यां त्रिष्टुप्छन्दस्कां परब्रह्मरूपेण षोडशिनः स्तुतिरियं । अत्र षोडशी परब्रह्मरूपेण स्तूयते । अतएव

षोडशिन उपस्थाने विनियोगः । अत्र विश्वामित्र ऋषिः । अग्निष्टोमस्य समानत्वात् । अन्यस्य चानुक्तत्वात् । गौतमदृष्टेनास्य तु संबन्धस्य प्राप्तेरिति । ऐन्द्रीति प्रथमया निर्देशात् । षोडशिन उपस्थाने विनियोगोऽस्याः । अथ चतुर्थो द्वादशाक्षरः । तेनैकाधिका ॥

इन्द्रश्चैन्द्रावारुणी षोडशिदैवत्या वा यजुरन्ता ॥

त्रिष्टुबित्यनुवर्तते ॥ इन्द्रश्च सम्राडित्येषा ऋक् त्रिष्टुप् इन्द्रावरुणदेवत्या षोडशिदेवत्या वा यजुरन्ता । अस्या अन्ते सह नाविनेत्येतद्यजुरस्तीत्यर्थः । ऋषिर्विश्वामित्र एव । तृतीयचतुर्थौ पादौ द्वादशाक्षरौ । तेन द्व्यधिका त्रिष्टुप् । षोडशिग्रहणे विनियोगः । षोडशीग्रहात् अथ द्वादशाहान्तर्गतमन्त्राणामनुक्रम उच्यते ।

अग्ने पवस्व वैखानस आग्नेयीं गायत्रीम् ॥(१)

अग्ने पवस्वेत्येतामृचमग्निदेवतां गायत्रीं वैखानसनामक ऋषिरपश्यत् । अतिग्राह्यग्रहणे विनियोगः । अस्या द्वितीयो सप्ताक्षरो । तत्राद्यस्य स्वपा इति व्यूहेन पूरणम् । द्वितीये तु व्यूहस्यावकाशो नास्ति । तेनैकोना ॥

उत्तिष्ठन्कुत्सस्त्वैन्द्रीम् ॥

गायत्रीत्यनुवर्तते । उत्तिष्ठन्नोजसेत्येतामृचमिन्द्रदेवत्यां गायत्रीं कुत्सऋषिरपश्यत् । अतिग्राह्यग्रहणे विनियोगः ॥

अदृश्रन् प्रस्कण्वः सौरीम् ॥

अदृश्रमित्येतामृचं गायत्रीं सौरीं सूर्यदेवत्यां प्रस्कण्व ऋषिरपश्यत् । अतिग्राह्यग्रहणे विनियोगः ॥

तिस्रोऽपि यजुरन्ताः ॥

अग्ने पवस्वोत्तिष्ठन्नदृश्रमित्येतास्तिस्रोऽपि यजुरन्ताः । उपयामेति सामीप्यात् ॥

(१) अग्नऽआयूंषि द्वे वैखानसऽआग्नेय्यौ । इति कात्यसर्वानुक्रमपाठः ॥

तेनैकोना । इडे रन्त इति प्रस्तारपङ्क्तिः यस्याः प्रथमद्वितीयौ पादौ द्वादशाक्षरौ तृतीयचतुर्थावष्टाक्षरौ सा प्रस्तारपङ्क्तिरित्युच्यते । आद्यौ चेत्प्रस्तारपङ्क्तिरिति वचनात् । अत्र चतुर्थो नवाक्षरस्तेनैकाधिका । सहस्रसंवत्सरे गर्भत्रिरात्रादावहीने त्रिसुत्ये साहस्या गोर्द्रोणकलशावघ्राणे आजिघ्रेत्यस्या विनियोगः इडे रन्त इत्यस्या कुसुरुबिन्दुऋषिर्गौर्देवता दक्षिणे कर्णे यजमानकर्तृके जपे विनियोग ॥

. विनः शासो भारद्वाज ऐन्द्रीमनुष्टुभम् ॥

वि न इन्द्र मृधो जहीत्यस्यामृचं इन्द्रदेवतामनुष्टुभं भरद्वाजस्यापत्यं शासऋषिरपश्यत् गवामयने महाव्रतसञ्ज्ञकेऽहनि महापङ्क्तेऽस्या विनियोगः । उपयामेति सामोष्णिक् । एष त इति सामगायत्री । सर्वमोपयामेत्यस्य विनियोग एष तइत्यस्य सादने इति भेद । व्यूहेन छन्दपूर्तिः ॥

वाचस्पतिं वैश्वकर्मणीं त्रिष्टुभम् ॥

शासो भारद्वाज इत्यनुवर्तते वैश्वकर्मणीमिति द्वितीयान्तनिर्देशात् । वाचस्पतिं विश्वकर्माणमितीमामृचं विश्वकर्मदेवतां त्रिष्टुभं भारद्वाजः । शासऋषिरपश्यत् । महाव्रत एव पूर्ववद्विकल्पेन ग्रहणे विनियोगः आद्यपादो द्वादशकः । तेनैकाधिका । उपयाम सामत्रिष्टुप् । एष ते सामोष्णिक् ॥

विश्वकर्मन्नैन्द्रीं वैश्वकर्मणीम् ॥(१)

शासो भारद्वाजस्त्रिष्टुभं इत्यत्राप्यनुवर्तते विश्वकर्मन्हविषेतीमामृचं त्रिष्टुभं ऐन्द्रीं इन्द्रदेवत्यां [illegible] शा सऋषिरपश्यत् । यजुषो पूर्वमन्त्र [illegible]

(१)-ऐन्द्रौ वैश्वकर्मण्यौ-इति [illegible]

सवीत्यानशब्देनात्र तन्मन्त्रा लक्ष्यन्ते । सर्वेषां सवीत्यागमंत्राणां देवाद्यध्ययनस्त्वर्थः ।

इह रतिः पशुदैवतम् ॥

इह रतिं रमध्वमित्येतद्यजुः पशुदैवतम् । प्राजापत्या बृहती मालाहार्ये आज्याहुतिहोमे विनियोगः ॥

उपसृजन् त्र्युष्णिगाग्नेयी ॥

उपसृजं धरुणमित्येषा त्र्युष्णिक्छन्दस्का । अग्निर्देवता । प्रथमोऽष्टाक्षरः पादः षडक्षराश्च स द्वादशाक्षरः । द्वितीयोऽष्टाक्षरस्त्रैकाधिका । आज्याहुतिहोम एव विनियोगः ॥

सप्त बृहती यजमानानामात्मस्तुतिः ॥

सप्त ऋद्धिधरमीत्येषा बृहतीछन्दस्का यजमानानामात्मस्तुतिः । अनया हि यजमानानामात्मस्तुतिं जनता अभूमेत्यादिना । अत्र प्रथमः सप्तकः द्वितीयश्चाष्टकः । तृतीयो दशकश्चतुर्थो नवक । इयं षट्त्रिंशदक्षरत्वाद्बृहती । आर्षी बृहती । तत्र पादाक्षरनियमाभावात् । सप्तर्ष्यंगाने विनियोगः ॥

युवन्तं पञ्चर्षैन्द्रीमत्यष्टिं त्र्यवसानाम् ॥

युवन्तमिन्द्रस्येतां इन्द्रदेवत्यां अत्यष्टिछन्दस्कां त्र्यवसानत्रययुक्तां पञ्चर्षिपञ्चविदृष्टाम् । दक्षिणस्य हविर्धानस्याधोऽक्षं गाड्निपृक्तये विनियोगः । अष्टषष्ट्यक्षरा अत्यष्टिः । अत्र षट्षष्ट्यक्षरापि तेन द्व्यूना ॥

आद्योऽर्धर्चश्चैन्द्रापार्वतः ॥

युवन्तमित्यस्या आद्योऽर्धर्च ऐन्द्रापार्वतः इन्द्रापर्वतदेवता । सवीत्यानं समाप्तम् । अथ सोमयागे नैमित्तिकान्युच्यन्ते ॥

परमेष्ठी नैमित्तिकान्याध्यायात् ॥

देवा दिवमाशीर्लिङ्गोक्तदेवता ॥

देवा दिवमगन्नितीदं यजुर्यजमानाशीः यजमानस्याशीः प्रार्थनायां लिङ्गोक्तदेवता । यज्ञदेवतेत्यर्थः । रसरूपस्य सोमस्य चमसस्यादन्यस्य स्कन्नस्याभिमर्शने विनियोगः । इमानि चत्वारि यजूंषि । तत्र देवान् । साम्न्यनुष्टुप् । मनुष्यान् एकाधिका आर्च्यगायत्री । पितॄन् । एकाधिका साम्न्यनुष्टुप् । यं कं च साम्न्यनुष्टुप् । अथ वा समस्तेयं चतुष्टिका । न तु चत्वारि ॥

चतुस्त्रिंशद्धर्मदेवत्या पङ्क्तिस्त्रिष्टुब्वा ॥

चतुस्त्रिंश० शतसन्तपस्त्येया घर्मदेवत्या पङ्क्तिच्छन्दस्का त्रिष्टुप्छन्दस्का वा । द्वाचत्वारिंशदक्षरत्वाद्विकल्पः । द्व्यूना त्रिष्टुप् । द्व्यधिका पङ्क्तिर्वा । अतएव आपकात्ययलोकेऽपि छन्दःसु उभसङ्ख्यान्तरछन्दसोरन्तराले पतनादक्षरस्य यजुश्छन्दो विकल्पो ज्ञेयः । अधिकापरं पूर्वं छन्द ऊनापरं चोत्तरमिति । शाखान्तरे महावीरभेदे आज्याहुतिहोमेऽस्या विनियोगश्चोक्तोऽस्ति ॥

यज्ञस्य यज्ञदेवत्या त्रिष्टुप् ॥

यज्ञस्य दोहइतीयं यज्ञदेवत्या त्रिष्टुप्छन्दस्का । कालाहुतिहोमानन्तरं यजमानवाचने विनियुक्ता ॥

आप्यायस्व सौमीं गायत्रीं नैध्रुविः काश्यपः ॥

आप्यायस्वेतीमामृचं सौमीं सोमदेवत्यां निध्रुवस्य पुत्रः काश्यपश्च पि- (?) रपश्यत् । अत्र नैध्रुविः काश्यपइत्येव पाठः यतएवं प्रवरेऽगस्त्यः काश्यपः "काश्यपो नैध्रुवे काश्यपोनैध्रुविर्भार्वदति" । यूपस्योपरि काकारोहणे उद्गातृकर्तृके होमे विनियोगः इति प्रायश्चित्तानि समाप्तानि ॥ २३ ॥(१)

(१) प्राणाय मेइत्यारभ्य द्यावापृथिव्यम् । इत्यन्त काण्वसर्वानुक्रमे नवम्याः कण्डिकाया अत्र पाठः, स पाठः पूर्वोक्तत्वादत्र न लिखित. ॥

## अथ वाजपेयः ॥

अथ वाजपेयमन्त्रैस्तन्मंत्रा उच्यन्ते । वाजपेयमन्त्राणामृष्यादिकं वक्ष्यत इत्यर्थः । तत्र प्रथमं सर्वमन्त्रसाधारणमृषिद्वयमाह ॥

## बृहस्पतेरार्षमिन्द्रस्य च ॥

वाजपेयमन्त्राणां सर्वेषां बृहस्पतिरृषिः इन्द्रश्च । उभावपि स-मुदितौ ऋषी भवतः स बृहस्पति. सवितारमीवेति तमिन्द्रो यजते-स्युभयोः श्रवणात् । इन्द्रश्च वेति संहिताभाष्ये पाठः । तस्मिन्पक्षे ऋषिविकल्पः ॥

## देव सवितः सावित्री त्रिष्टुप् ॥

देव सवितः प्रसुवेत्येषा ऋक् सवितृदेवत्या त्रिष्टुप् सर्वेषां कर्म-णां पुरस्ताद्व्याहृतिहोमे विनियोगः । इयमार्षी त्रिष्टुप् । यति-यताक्षरपादयुक्तत्वात् । वाऽहेत्येतद्यजुः पृथक्पर्वेण ॥

## ध्रुवसदमैन्द्राणि त्रीणि ॥

ध्रुवसदमित्यादीनि त्रीणि यजूंषि इन्द्रदेवत्यानि । तत्र ध्रुवसदं । प्राजापत्या त्रिष्टुप् । अप्सुषदं त्वा । न्यूनेन पादेन पङ्क्तिः, पृथिवि-सदं । न्यूनैः पादैः पङ्क्तिः । एष ते इत्यासुर्यनुष्टुप् । न्ते । अथ ग्रहाणामैन्द्राणां सोमग्रहाणां ग्रहणे क्रमेण विनियोगः ॥

## अपाᳪ रसदेवत्याऽनुष्टुप् ॥

अपाᳪरसमित्येषा रसदेवत्याऽनुष्टुप् । चतुर्थस्यैन्द्रग्रहस्य विनियोगः उपयामेति साम्न्यनुष्टुप् । एष ते आसुर्यनुष्टुप्

## ग्रहा लिङ्गोक्तदेवताऽनुष्टुप् ॥

ग्रहाऊर्जाहुतयो इत्येषा लिङ्गोक्तदेवता अनुष्टुप् । देवतेत्यर्थः । पञ्चमस्य ऐन्द्रग्रहस्य ग्रहणे विनियोगः । वत् ॥

सम्पृचौ यजुषी ॥

सम्पृचो स्थइतीमे यजुषी लिङ्गोक्तदैवते इति शेषः अथ संपृचौ लिङ्गोक्ते इति वा पाठः सोमयज्ञस्यावहानयोर्दैवते इत्यर्थः, अथ वा लिङ्गोक्तदेवता इत्यनुवर्तते तद्वचनयादचनं विपरिणम्य सम्बद्ध्यते । सम्पृचावित्यस्य भृतयोः प्रत्याहरणे । बहुलिङ्गो'पते ॥

इन्द्रस्य रथः ॥

इन्द्रस्य वज्रोऽसीत्यस्य रथो देवता । रथाद्‌गाहरणे विनियोगः आसुरीगायत्री ॥

वाजस्य मार्थिव्यतिजगती ॥

वाजस्य नु प्रसवइतीयमृक् । पृथिवीदेवत्यापतिजगतीछन्दस्का धूर्गृहीतस्य रथस्य वेदिमध्ये नयने विनियोगः । द्वापञ्चाशदक्षरां अतिजगतीत्युच्यते । इयं तु द्व्यूना ॥

अन्त्यः पादः सावित्रः ॥

अस्या अन्त्य अन्ते भवः पादस्तस्यां नो देवः सवितेत्ययं सावित्रः सवितृदेवत ॥

अस्वतारम्बदैवताऽनवसाना पुरउष्णिक् ॥

अपूस्वन्तरमृतमित्येषाऽपश्वदेवत्या अनवसानम् हित्वा पुरउष्णिक्छन्दस्का । अश्वपोषणे विनियोगः । यस्याः आद्यपादो द्वादशाक्षरः । द्वितीयाष्टाक्षरौ सा पुरउष्णिक् इत्युच्यते । आद्यश्चेत्पुरउष्णिगिति वचनात् । अस्य अन्तरत्वेवं व्यूहेनाद्यपादे द्वादशाक्षरपूरण । द्वितीयतृतीयो तु पूर्वावेव । मध्येऽवसानं नास्ति । देवीराप इति व्यूहेन साम्नजगती आपोदेवताः । अश्वपोषणे समुच्चयेन विकल्पेन विनियोगः ॥

वातो वा तिस्रोऽश्वस्तुतयउष्णिक्त्रिष्टुजगत्य. ॥

वातो वा, मनो वा, वातरंहा, जवो यस्तेतास्तिस्रश्च. ऋ-मैर्यापङ्क्तित्रिष्टुब्जगत्योऽश्वस्तुतयश्च । अश्वा आभिः स्तूयन्ते । अश्वदे-वत्याः एताः स्तुतिभाजो देवता भवन्तीत्युक्तत्वात् । वातो वेत्यपि पृथक् र-थे दक्षिणायुग्ययोजने विनियोग । वातो वेतीयमेकाधिका आर्षी-उष्णिक् पादानामक्षरसङ्ख्यानियमेऽप्यक्षरसङ्ख्यातथात्वात् । त-दुक्तम् । अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम् । इत्यादिप्रतिपत्त्यर्था पादह्रस्ताक्षरैरर्चामिति, वातरंहा इत्यत्र प्रथमद्वितीयौ द्वादशकौ । द्वितीयो व्यूहेनैकादशकः चतुर्थश्च स्तोभोऽप्येकादशक इति । तथाऽयं त्रिष्टुबेव कृतः । द्वौ तु जागतौ यथा "स्वाभ्यागते,जगती त्रैष्टुभे त्रिष्टुबित्युक्तत्वात्" । जवो यस्त इत्यत्राद्यौ द्वादशकः । द्वितीयतृतीया-वेकादशकौ चतुर्थश्चतुर्दशक इति । तेनाष्टाचत्वारिंशदक्षरत्वादियं ज-गती । अनियताक्षरपादत्वे पादाक्षरैस्तथात्वात् ॥

वाजिनोऽश्वाः ॥

वाजिनो वाजजित इत्यस्याश्वदेवता । सामजगती ऽश्वाना-बार्हस्पत्यचरुघ्रापणे विनियोग ॥

देवस्याहं लिङ्गोक्तानि ॥

देवस्याहꣳ सवितुरित्यादीनि इन्द्रस्यार्धजितो वाजं जेषमित्यन्ता-नि लिङ्गोक्तदेवतानि । आद्यस्य देवस्याह इत्यस्य व्यूहेन ब्रह्मबृहती ब्राह्मणकर्तृके वाजपेये ब्रह्मणो रथचक्रारोहणे विनियोगः । द्विती-यस्य सामजगती क्षत्रियकर्तृके वाजपेये ब्रह्मणो रथचक्रारोहणे वि-नियोगः । तृतीयस्य व्यूहेन प्राजापत्या त्रिष्टुप् । ब्राह्मणवाजपेये ब्राह्मणो रथचक्रादवतरणे विनियोग. । चतुर्थस्य एकाधिका साम-जगती । क्षत्रिययज्ञे रथचक्रादवरोहणे विनियोगः । बृहस्पते वाजं

प्राजापत्या त्रिष्टुप्। ब्राह्मणयज्ञे दुन्दुभिवादने विनियोगः। इन्द्रं वाजं साम पङ्क्तिः। क्षत्रियय‍ज्ञे दुन्दुभिवादने विनियोगः। एषा वः वाचोषधिरेक्। ब्राह्मणयज्ञे मन्त्रानुदुन्दुभ्यवतारणे विनियोगः। देवस्याहं। व्यूहेन प्राजापत्या त्रिष्टुप्। यजमानस्य यज्ञयूपारोहणे विनियोगः॥

वाजिनोऽश्वाः॥

वाजिनो वाजजितश्चत्वाख्या देवता। सामजगती यजमानवाचने विनियोगः॥

एष स्य हे दधिक्रावा वामदेव्योऽश्वदेवत्ये जगत्यौ॥

एवस्य वाजी। उतस्मास्य। इतीमे द्वे ऋचौ जगत्यौ अश्वदेवत्ये दधिक्रावा वामदेव्योऽपश्यत्। आज्याहुतिहोमे विनियोगः। अनुसंवरे वा प्रथमायाश्चतुर्थः पादो द्वादशाक्षरः तस्य व्यूहाभ्यां पूरणं। द्वितीयायाश्चतुर्थस्य व्यूहेन पूरणं। स्वाहेति यजुःपृथक्॥

अग्नो वसिष्ठो विराजम्॥

अश्वदेवत्यामित्यनुवर्त्तते अथो अथश्विस्तीमां विराट्छन्दस्कांवसिष्ठऋषिरपश्यत्। अश्वा अश्वाश्चैव देवता। होमेऽनुमन्त्रे वा (१) विनियोगः। यस्या दशाक्षरास्त्रयः पादाः सा विराट्पङ्क्तिः, वैराजैर्विराडित्युक्तेः। अत्र तु प्रथमएकादशाक्षरः तनैकाधिका॥

तेनो नाभानेदिष्टो जगती॥

अश्वदेवत्यामित्यनुवर्त्तते ते नः अर्वन्तइतीमां अश्वदेवत्यां जगतीं नाभानेदिष्टऋषिरपश्यत्होमेऽनुमन्त्रणे वा विनियोगः॥

वाजेवाजे वसिष्ठस्त्रिष्टुभम्॥

वाजेवाजेऽवत इतीमामश्वमश्वदेवत्यां त्रिष्टुभम् वसिष्ठोऽपश्यत्। अ-

---

(१) होम वाचने वा विनियोगः। इति वद्धतिपाठः॥

सर्वे विनियोगः ॥

नमः पृथिवी ॥

नमो मात्र इत्यस्य पृथिवी देवता सामीयृपिकभूम्यवेक्षणे विनियोगः । व्यूहेन सामजगती । द्विधीपृथिवी वा ॥

इयमासन्दी ॥

इयं ते राडित्यासन्दी देवता । देवीबृहतीमासन्द्यां यजमानस्य विनियोगः ॥

यन्ता सुन्वन् ॥

यन्ताऽसि यमन इत्यस्य सुन्वन्देवता । यजमानस्योपवेशने विनियोगः । व्यूहेन ककुब्बृहती ॥

वाजस्य प्राजापत्यं तृचं त्रैष्टुभम् ॥

वाजस्येमं प्रसवः । वाजस्येमां । वाजस्य नु प्रसव इतीदं तृचं प्रजापतिदैवतं त्रिष्टुप्छन्दस्कं । सम्भृतस्य सर्वौषधस्य होमे विनियुक्तम् । वाजस्येममित्यस्य द्वितीयपादो व्यूहेन पूरणीयः प्रथमाया द्वितीयायाश्च चतुर्थो द्वादशाक्षरः । तृतीयायास्तृतीयः । तेन सर्वा विकल्पोक्ताः ॥

सोमस्तृचं तापसः ॥

सोमं राजानं । अर्यमणं, अग्ने अच्छेतीदं तृचं तापसस्यार्षम् । सर्वौषधहोम एव विनियुक्तम् ॥

आद्या वैश्वदेव्यनिरुक्ताऽनुष्टुप् ॥

अस्य तृचस्याद्या सं स राजानमित्येषा ऋग्विश्वदेवदेवतानिरुक्ता मध्ये विश्वदेवपदप्रयोगशून्यत्वादनुष्टुप्छन्दस्का । अत्र तृतीयः समकः । तेनैकोना । अथ वा सर्वदेवत्वाद्वैश्वदेवीत्युक्तं । तथा च यास्कः "यत् किञ्चिद् दृष्टदैवतं तद्वैश्वदेवानां स्थाने युज्यत इति"। तेना-

च सोमाग्न्यादित्यविष्णुसूर्यबृहस्पतयो देवता इत्यर्थः । अतएव संहिताभाष्ये । सोमं राजानमनुष्टुप् लिङ्गोक्तदेवतेत्युक्तम् । अतएव संहिताभाष्येऽपि लिङ्गोक्तदेवत्यानुष्टुबिति ॥

## द्वितीया लिङ्गोक्तदेवता ।

अनुष्टुबित्यनुवर्तते । अस्य अनुवाकस्य द्वितीया अर्यमणमित्येषाऽनुष्टुप् । लिङ्गोक्तदेवताः । अर्यमबृहस्पतीन्द्रवायुविष्णुसरस्वतीदेवतेत्यर्थः ॥

## तृतीयाऽऽग्नेयी ॥

अनुष्टुबित्यनुवर्तते अस्य अनुवाकस्य तृतीया अग्नेऽअच्छेत्येषाऽनुष्टुबग्निदेवत्या ॥

## प्रनो लिङ्गोक्ता गायत्री ॥

प्रनो अद्येत्येषा लिङ्गोक्तदेवताऽर्यमपूषबृहस्पतिवाग्देवतेत्यर्थः । गायत्रीछन्दः । सर्वोप्ययमेव होमे विनियोगः अथ प्रथमस्य व्यूहेन पूर्तिः ॥

## सरस्वत्यै सुनम्बन् ॥

सरस्वत्यै वाचइत्यस्य सुनम्बन्देवता प्राजापत्यात्रिष्टुप् । देवस्य त्वेत्यस्य सूक्तम् । होमशेषेण यजमानाभिषेके विनियोगः ॥

## अग्निःसप्तदश लिङ्गोक्तदेवतानि ।

अग्निरेकाक्षरेणेत्यादीनि प्रजापतिः सप्तदशाक्षरेणेत्यन्तानि लिङ्गोक्तदेवतानि यजूंषि अग्निसोमादिदेवतानीत्यर्थः । होमे वाचने वा एषां विनियोगः । तत्राग्निरेकाक्षरेणएकोनाऽऽर्चीगायत्री । अग्निर्देवता । अश्विनौ देवता । साम्नी त्रिष्टुप् । विष्णुः । एकोनाऽऽर्चीगायत्री । विष्णुर्देवता । सोमः सोमो देवता । साम्नी त्रिष्टुप् । पूषा । पूषा देवता । एकाधिकाऽऽर्चीगायत्री सविता देवता गायत्री । मरुतः मरुतो देवता आर्च्युष्णिक् । बृहस्पतिः बृहस्पति-

देवता. एकाधिकाऽऽर्चगायत्री । मित्रः मित्रोदेवता सामपङ्क्तिः। वरुणः वरुणोदेवता । आर्चगायत्री । इन्द्रः इन्द्रोदेवता । एकाधिका-ऽऽर्चगायत्री । विश्वेदेवा । विश्वेदेवताः सामपङ्क्तिः। वसवः। वसवो देवताः सामजगती । रुद्राः । रुद्रा देवताः । एकोना सामजगती । आदित्या. आदित्या देवता । एकोनासामजगती । अदितिः अदितिर्देवता । सामत्रिष्टुप् । प्रजापतिः । प्रजापतिर्देवताएकाधिकासामजगती । इति वाजपेय. समाप्तः ॥ ३५ ॥

## अथ राजसूयः ॥

अवेतदतिथेय । राजसूयपदेन तन्मन्त्रा अभ्यन्ते ॥

वरुणस्यार्षम् ॥

राजसूयमन्त्राणां सर्वेषां वरुणऋषिरित्यर्थ. ॥

एष ते प्रार्थिवम् ॥

एष ते निर्ऋते इत्येकाधशः पृथिवीदेवतं । सामोष्णिक् । पवित्रप्रहोमे विनियुक्तम् ॥

अग्निनेत्रेभ्यो देवार्षमाध्यायातृद्यद्यानि दैवानि ।

अग्निनेत्रेभ्यइत्यादीनि दश यजूंषि दैवानि देवदैवत्यानि । पञ्चवातीयहोमे विनियुक्तानि । अग्निनेत्रेभ्यः सामोष्णिक् । यमनेत्रेभ्यः आसुरीगायत्री विश्व देवनेत्रेभ्यः सामानुष्टुप् । मित्रावरुणनेत्रेभ्यो देवेभ्यइत्यक्षिण्पदे आर्चगायत्री । मरुन्नेत्रेभ्यो देवेभ्यइत्यक्षिण्पदे तु । आसुरीगायत्री । सोमनेत्रेभ्य । एकाधिका आर्चगायत्री । ये देवा अग्निः आसुरीगायत्री, ये देवा यमनेत्रा । सामानुष्टुप् । ये देवा विश्वदेवनेत्रा. । एकाधिका सामानुष्टुप् । ये देवा मित्रावरुणनेत्रा उत्तरासदइत्यक्षिण्पदे । एकाधिका आर्चगायत्री । ये देवा मरुन्नेत्रा उत्तरासदइत्य.क्षिण्पदे सामानुष्टुप् । ये देवाः सोमनेत्राः । साम-

वह्निः ॥

अग्ने सहस्व देवयज्या देवयानश्च भारत्याग्नेयीम-नुष्टुभम् ॥

भरतपुत्रो देवश्रवा देववातश्चेतिद्वावृषी अपश्यताम् इष्टकायां उ-ल्मुकादाने विनियोगोऽस्याः । अत्र द्वितीय. सामायस्ते नैकोना ॥

उपांश्वोस्त्रीणि रक्षोघ्नानि ॥

उपांशु गौर्वोरित्यादीनि त्रीणि यजूंषि रक्षोघ्नानि ॥ रक्षो-घ्न देवता । उपांशु गौरित्यस्य आसुरी गायत्री । होमे विनियो-ग. । रक्षसां त्वा । यजुरुपांशुक् स्रुवनिरसने विनियोगः । अवधिघ्न यजुर्गायत्री आगमने विनियोग. अवधिघ्नाम् । दैवीपङ्क्तिः, अ-सो हतो यजुर्बृहती । अनयोर्मन्त्रयोः प्रत्यभिचारे विनियोग. तत्रा-सुरनामित्यनयोः पादयो आने मद्गानादि रक्षम् ॥

सविता द्वे यजमानः ॥

सविता त्वा, इम देवा इत्यनयोर्यजमानो देवता यजमानस्य दक्षिणं बाहुं गृहीत्वाऽध्वर्योर्जपे विनियोगः । सविता त्वा अति-जगती । इमन्देवा अत्यष्टिः ॥ २६ ॥

अपो देवा अपो त्रिष्टुप् ॥

अपो देवा मधुमतीरितीयमृक् । आपो आपोऽस्या देवता द्व्य-र्धं त्रिष्टुप्छन्दः । द्वितीयो दयाभरः । तेनैकोना । सारस्वतीना-मपां ग्रहणे विनियोगः ॥

हृष्याजमिलिङ्गोक्ता ॥(१)

अथ हृष्यजमित्यादीनां स्वाहाकारान्तानां पूर्वपूर्वेणमन्त्रा-णां गृहीष्यमाणाज्यप्रु अनुगृहीतहोमे विनियोगः, उत्तरोत्तर

(१) कात्यसर्वानुक्रमे देवताभेदीयाधिकः पाठो नेष्यः ॥

मन्त्राणामपां पतये तन्न इष्प्रजर्मिः । साम्नानुष्टुभौ । इमसेनो दधि-मधुरगायत्र्यौ । मर्यन्तस्य साम्नोष्णिहौ । योऽक्ष्णतीस्य । आसुरी-गायत्र्यौ । आपः परि । ऋग्गायत्र्यौ । अपां पतिः साम्नानुष्टुभौ । अपां गर्भः आसुरगायत्र्यौ । सूर्यत्वचसः स्थ साम्नानुष्टुभौ । सूर्यव-र्चसस्थ । साम्नानुष्टुभौ मान्दास्थ आसुर्यनुष्टुभौ । व्रजक्षितस्थ आ-सुरगायत्र्यौ । वाशास्थ आसुरानुष्टुभौ । शक्तिरास्थ । साम्नोष्णि-हौ । जनभृतस्थ आसुरगायत्र्यौ । विश्वभृतस्थ आसुरगायत्र्यौ । आपः स्वराजस्थ । साम्नानुष्टुप् । मरीचीनां सर्वासामपां संसर्गे विनियोगः ॥

## मधुमतीरनाधृष्टाऽआपे ॥

मधुमतीर्मधुमतीरनाधृष्टाः सीदतेत्येवं यजुषी आपे अनयोरा-प्यो देवता इत्यर्थः मधुमतीरित्यस्य एकोनासामजगती । अष्टादश-सख्यानामपामोदुम्बरे पात्रे समासेके विनियोगः । अनाधृष्टा इत्यस्य साम्नत्रिष्टुप् । समासिक्तानामपां मैत्रावरुणधिष्ण्यस्य पुरस्तात्सादने विनियोगः ॥

## सोमस्य धर्म ॥

सोमस्य त्विषिरसीत्यस्य धर्म देवता । आसुरीगायत्री । व्याघ्र-चर्मास्तरणे विनियोगः ॥

## अग्नये लिङ्गोक्तानि ॥

अग्नये स्वाहेत्यादीनि द्वादश यजूंषि लिङ्गोक्तदेवतानि पार्थहोमे विनियुक्तानि । आद्यानां दैवीपङ्क्तिः सरस्वत्यै । याजुषी गायत्री । पूष्णे दैवीबृहती । बृहस्पतये । दैवीजगती । इन्द्रायेत्याद्याः षड्दैवपङ्क्तयः पवित्रे स्थ इत्यस्य तूष्णीम् ॥

## अग्निभृष्टमापम् ॥

अग्निभृष्टमसीत्येतदग्निदैवतं । एकाधिका आसमजगती । अपां त-

स्थापने विनियोगः ॥

सधमादो वारुणी त्रिष्टुप् ॥

सधमादो द्युम्निनीरित्यृक् वरुणदेवत्या त्रिष्टुप्छन्दः अत्र द्वितीयचतुर्थयोर्व्यूहेन पूरणम् । अभिषेचनीयेषु पात्रेष्वपां व्यानयने विनियोगः ॥

क्षत्रस्य चत्वारि तार्प्यपाण्ड्वाधीवासोष्णीषाणि ॥

क्षत्रस्योल्बमित्यादीनां चतुर्णां यजुषां क्रमेण तार्प्यपाण्ड्वाधीवासोष्णीषाणि देवताः क्षत्रस्योल्ब तार्प्यदेवता । यजुर्गायत्री । तार्प्यपरिधाने विनियोगः, क्षत्रस्य जराय्वसीत्यस्य पाण्ड्वदेवता । दैवीजगती । पाण्ड्वपरिधाने विनियोगः, क्षत्रस्य योनिरित्यस्याधीवासोदेवता । दैवीजगती । अधिवासप्रतिमोके विनियोगः । क्षत्रस्य नाभिरसीत्यस्योष्णीषं देवता । दैवीजगती । उष्णीषस्य सवेष्य निवीतंऽवगूहने विनियोगः । नाभिदेशे परिहरणे वा विनियोगः ॥(१)

इन्द्रस्य धनुः ॥

इन्द्रस्य वार्त्रघ्नमसीत्यस्य धनुर्देवता । धनुःप्रदाने विनियोगः । प्राजापत्या यजुः ॥

मित्रस्य बाहू ॥

मित्रस्यासीत्यस्य बाहू देवते । यजुर्बृहती । धनुःकोट्योर्मार्जने विनियोगः ॥

त्वया धनुः ॥

त्वयाऽयं वृत्रमित्यस्य धनुर्देवता दैवीजगती । यजमानाय धनुःसमर्पणे विनियोगः ॥

---

(१) तार्प्यं नाम क्षौमं वल्कलं घृताक्तं वा, पाण्ड्वं रक्तकम्बलं, अधीवासः कञ्चुक इत्येतेऽर्थाः सम्यक् महीधराचार्येण प्रतिपादिताः ॥

## इषा पञ्चामिषवः ॥

इषासीत्यादीनां दिग्भ्य पातेत्यन्तानां षणां यजुषां इषादी देवताः । इषाऽसि, ऊर्जाऽसि, सुमाऽसीति त्रयाणां दैव्यनुष्टुप्छन्दांसि पयाऽसि प्रयाणादाने क्रमेण विनियोगः । पातेनं प्राच्यं । दैवीपङ्क्तिः पातेनं प्रत्यञ्चं यजुर्गायत्री । दिग्भ्यः दैवीहहती । क्रमेण तिसृणामिष्टूणां समर्पणे विनियोग ॥

## आविः प्राजापत्यम् ॥

आविर्मर्याइत्येतस्यप्रजापतिर्देवतं । दैवीदहती । दापने विनियोगः समानाम् ॥

## पराणि लिङ्गोक्तानि ॥

अस्मात्पूर्वोक्तादाविर्मर्या इत्येतस्मात्पराणि अग्रे पठ्यमानानि आवित्तोयग्निरित्यादीनि लिङ्गोक्तदेवतानि । अग्नीन्द्रादिलिङ्गोक्तदेवतानि । आवित्तोग्निर्यजुर्बृहती । आवित्ते । आसुर्य्यनुष्टुप् । आवित्ता । यजुर्बृहती । सर्वेषां वाचने विनियोगः ॥ १७ ॥

## अवेष्टा रुद्रनाशनम् ॥

अवेष्टा दन्दशूका इत्येतदन्तर्मृत्युनाशनं । दैवीजगती केशवास्ये लोहायसप्रक्षेपे विनियोग, प्राजापत्यं यजु मृत्युनाशने विनियुक्तमिति काण्व संहिताभाष्ये ।

## प्राची पञ्चानां यजमानः ॥

प्राचीमारोहेत्यादीनां वर्षो द्रविणमित्यन्तानां पञ्चानां यजुषां यजमानो देवता । वाचने विनियोगः । प्राची व्यूहेन प्राजापत्या जगती । दक्षिणा । ऊर्ध्वा पङ्क्ति, प्रतीची । व्यूहेन प्राजापत्या जगती । उदीची । ऊर्ध्वा पङ्क्ति, । ऊर्ध्वा । ब्राह्मीउष्णिक् ॥

## प्रत्यस्तं मारुतम् ॥

प्रत्यस्तं नमुचेः शिर इत्यासुरदेवतं । प्राजापत्या गायत्री । पादेन सीसनिरसने विनियोगः ॥

मृत्योरोजोऽसि यजुः ॥

मृत्योः पाहि । ओजोऽसि, सहोऽसीत्यनयोर्यजुषोरग्निर्देवता । मृत्योरित्यस्य दैवीबृहती छन्दः अधः पद करणे विनियोगः ओजोऽसी त्यस्य यजुः पङ्क्ति छन्दः शिरसि करणे विनियोगः ॥

हिरण्यरूपौ मैत्रावरुणी त्रिष्टुब्यजुरन्ता ॥

हिरण्यरूपा उषस इत्येषा ऋङ् मित्रावरुणदेवत्या त्रिष्टुप् । अस्य द्वितीयो दशाक्षरोऽन्तेऽनेको ना यजुरन्ता । अश्वानाप्तं मित्रोऽसीत्येतद्यजुः तस्य दैवीजगती छन्दः । बाहौ बद्धग्रहणे विकल्पेन सर्वपरी विनियोगः ॥

सोमस्य द्युम्नेन ॥

सोमस्य त्वेत्यादीनां चतुर्णां यजुषां राजेत्यन्तानां यजमानो देवता । अभिषेके विनियोगः । अत्राभिषिञ्चामि यजमान यजमान तवैधीत्यनयोर्यजुर्ष्वपि मन्त्रेष्वनुषङ्गः । अनुषङ्गस्य च वैदिकत्वात् मन्त्रान्तरगतो अपन कार्य तत्र सोमस्य त्वा द्युम्नेन यजुर्बृहती । अग्नेर्भ्राजसा द्युम्नेन साम्नी जगती । सूर्यस्य वर्चसा साम्नी जगती । इन्द्रस्येन्द्रियेण साम्नी जगती । इमन्देवा इत्यत्र तु प्राग्वत् । अत्राभिषेके विनियोग इति विशेषः ॥

प्रपर्वतस्याग्नी त्रिष्टुप् ॥

प्रपर्वतस्येत्येषा ऋङ् अग्निदेवत्या त्रिष्टुप् । काष्ठुकयाभिषेकेण प्रतिमन्त्रे विनियोगः ॥(१)

विष्णोस्त्रीणि लिङ्गोक्तानि ॥

---

(१) अभिषेके इति पाठान्तरम्. ॥

विष्णोर्विक्रमणमसीत्यादीनि त्रीणि यजूंषि विष्णुलिङ्गानि । यज-मानदेवतानीत्यर्थः । आद्यस्य प्राजापत्यागायत्री । ततो दैवीजगती । ततो दैवीत्रिष्टुप् यजमानस्य क्रमणे विविक्रमणे विनियोगः । त्र-याणां क्रमेण ॥

प्रजापते न त्वदन्या त्रिष्टुब्यजुषी अयममुष्य-पुत्रः ॥

प्रजापते न त्वदित्येषा त्रिष्टुप् । प्रजापतिर्देवता तस्या यजुःसंज्ञा अ-न्त्यास्त्रिष्टुभो मध्ये तृतीयचतुर्थपादयोरन्तराले यजुरस्तीत्यर्थः । कि-यद्यजुरित्यपेक्षायामाह । अयममुष्य यजुः अयममुष्य पिता असावस्य पितेत्येतावदेव तद्यजुर्मध्ये वर्ततइत्यर्थः । अत्र प्रजापते न इति त्रि-ष्टुभि प्रथमः पादो व्यूहेन पूरणीय । चतुर्थस्तु दशाक्षरः । तेनैको-ना । गाम्नाद्यर्थहोमे विनियोगः ॥

रुद्र यद्रौद्रम् ॥

रुद्र यत्त इत्येतद्रुद्रदैवतं । साम्नीत्रिष्टुप् अभिषेकोदकशेषावदाना-माग्नीध्रीये होमे विनियोगः ॥ १८ ॥

इन्द्रस्य लिङ्गोक्तानि ॥

इन्द्रस्य वज्रोऽसीत्यादीनि समिन्द्रियेणेत्यन्तानि लिङ्गोक्तदेवतानि । तत्र इन्द्रस्य वज्रोऽसि रथोदेवता । यजुर्गायत्री । यथास्थापनादवि विनियोगः । मित्रावरुणयोस्त्वा रथोदेवता । साम्नीत्रिष्टुप् । रथयोजने विनियोगः । अव्यथायै त्वा । साम्न्युष्णिक् । रथो देवता । यजमानस्य रथारोहणे विनियोगः । मरुतां । धुर्यो देवता । यजुर्बृह-ती । दक्षिणधुर्यमार्जने विनियोगः । आपाम यजमानो देवता । य-जुर्गायत्री । गवां मध्ये रथस्थापने विनियोगः । समिन्द्रियेण । य-जमानो देवता । दैवीपङ्क्तिः । यजमानस्य धनुरार्त्न्या गोरुपस्पर्शने

विनियोगः ॥

मा ते संभरण: प्राजापत्यैन्द्रीं त्रिष्टुभम् ॥

मा तादृन्द्र ते वयमितीमामृचमिन्द्रदेवतां त्रिष्टुपछन्दस्कां प्रजापतेरपत्यं साधारणऋषिरपश्यत् । अत्र प्रथमो दशक. । द्वितीयो द्वादशक: । तृतीय एकादशक ॥ चतुर्थो व्यूहेनैकादशकइति । इयमाज्य पात्रदेवी आपने विनियोगः ॥

अग्नये लिङ्गोक्तानि ॥

अग्नये स्वाहा वतयस्त्वादीनि चत्वारि यजूंषि लिङ्गोक्तदेवतानि इयविमोचनीयहोमे विनियुक्तानि । अग्नये । सोमाय यजुः पङ्क्तिः सवर्ता, इन्द्रायेति, प्राजापत्ये गायत्र्यौ ॥

पृथिवि मातर्भूमिः ॥

पृथिवि मातरित्यस्य भूमिर्देवता । भूम्यवेक्षणे विनियोग याजुर्षं बृहती ॥

हंꣳसो वामदेवः सौर्यं सप्तपञ्चपदाब्रह्माभिधायिनीमतिजगतीम् ॥

हंꣳस शुचिषदितीमामृचं सूर्यदेवतां सप्तपदस्य परस्य ब्रह्मणोऽभिधायिनीमभिधायिनीमतिजगतीछन्दस्कां वामदेवऋषिरपश्यत् । इयमादर्शेऽवेक्ष्या विनियोग: अत्र प्रथमद्वितीयो द्वादशको । तृतीयएकादशक: ।चतुर्थस्त्रयोदशकइति । तेन जगतीमतिक्रान्तात्यतिजगती । एकाक्षराधिका जगत्यर्थ. । न तु द्वाषष्ट्यक्षरा ॥

दृयच्छतमानौ ॥

इयदसीत्यस्य युङ्ङसीत्यस्य च शतमानौ देवते । शतमानयोरुपधाने विनियोग: । इयदसीति द्वे यजुषी द्वादशाक्षरे साम्न्यनुष्टुभौ । शतमानयोरुपधाने विनियुक्ते ॥

स्वर्गस्य शाखा ॥

स्वर्गस्येत्यस्य शाखादेवता । साम्नापत्या गायत्री । शाखोपस्पर्शने विनियोगः ॥

इन्द्रस्य बाहू ॥

इन्द्रस्य बाहू इत्यस्य बाहू देवते । स्वर्गेण प्राजापत्या गायत्री । पयस्यायां यजमानबाहूपवहरणे विनियोगः ॥

स्योनाऽस्यासन्दी ॥

स्योनाऽसीत्यस्याऽऽसन्दीदेवता । दैवीजगती आसन्दीनिधाने विनियोगः ॥

वरुणस्याधीवासम् ॥

वरुणस्य योनिरसीत्यधीवासोदेवता । अधीवासस्यास्तरणे विनियोगः दैवीजगती ॥

स्योनाऽ सुन्वन् ॥

स्योनामासीदेत्यस्य सुन्वन्देवता । एकाधिकाप्राजापत्या । यजमानस्यासन्द्यामुपवेशने विनियोगः ॥

निषसाद शुनःशेपो वारुणीं गायत्रीम् ॥

निषसादेतीमामृचं वरुणदेवतां गायत्रीं शुनःशेपऋषिरपश्यत् । अत्र प्रथमोऽष्टकः द्वितीयः षट्कः । तृतीयः सप्तकः । तेनेयं वर्धमाना गायत्री । यस्यास्तु षट्सप्तकाष्टकाः सा वर्धमानेति वचनात् । अथ वा काकुभ्मती संज्ञा गायत्री । यस्या एकः पादः षडक्षरः सा काकुम्मतीत्युच्यते । षट्केककुम्मतीति पिङ्गलोक्तेः ॥ यजमानस्योरस्यालम्भने विनियोगः ॥

अभिभूरस्यता यजमानो वा ॥

अभिभूरसीत्यस्य यजुषो अक्षादेवता यजमानो वा । सामीषि-

भ् । मद्याभ्यां यजमानहस्ते आवपे विनियोगः ॥

### ब्रह्मँस्त्वमामन्त्रणानि पञ्चलिङ्गोक्तानि ॥

ब्रह्मँस्त्वं ब्रह्मासीत्यादीनि पञ्चसङ्ख्याकामन्त्रणानि लिङ्गोक्तदेवतानि । ब्रह्मन्निति ब्रह्मदेवतात्वं ब्रह्मासीति प्रतिवचनानि यजमानदेवतानीत्यर्थः प्रश्नप्रतिवचनेविनियुक्तानीत्यर्थः तत्र ब्रह्मन्नित्यस्य ब्रह्मदेवता दैव्युष्णिक्छन्दः । ब्रह्मामन्त्रणे विनियोगः । त्वं ब्रह्माऽसि सविताऽसीत्यस्य यजमानोदेवता । आसुर्यनुष्टुप् । त्वं ब्रह्माऽसि वरुणोऽसि यजुस्त्रिष्टुप् । त्वं ब्रह्मासीन्द्रोऽसि यजुर्बृहती । त्वं ब्रह्माऽसिरुद्रोऽसि । यजुः पङ्क्तिः । त्वं ब्रह्माऽसीत्येतावदेव पञ्चमे प्रतिवचनं । तत्र दैवी बृहती । सर्वेषां यजमानो देवता । ब्राह्मणप्रतिवचने विनियोगः ॥

### इन्द्रस्य स्फ्यः ॥

इन्द्रस्य । वज्रोऽसि तेन मे रध्यस्य स्फ्यो देवता । यजुस्त्रिष्टुप् । यजमानाद्दीना स्फ्यसमर्पणे विनियोगः ॥

### अग्निः पृथुराग्नेयम् ॥

अग्निः पृथुराग्नेय । अग्निः पृथुरित्येतद्यजुरग्निदैवतं । धूतभूमौ हिरण्यस्योपरि चतुर्गृहीतहोमे विनियुक्तं प्राजापत्यात्रिष्टुप् ॥

### स्वाहाकृता अच्छा ॥

स्वाहाकृताः सूर्यस्येत्यस्यापो देवता, साम्नीत्रिष्टुप् । पयनिवापने विनियोगः ॥

### सविता लिङ्गोक्तदैवतम् ॥

सविता त्वसवित्रेत्येतल्लिङ्गोक्तदैवतं । सवित्रादिदैवतमित्यर्थः । ध्रुवेनात्यष्टिश्छन्दः । दक्षिणे शतसङ्ख्याकानां ब्राह्मणानां समर्पणात्प्रागुमारणे विनियोगः ॥ २८ ॥

अथ चरकसौत्रामणी ॥

अध्याय इतिशेष अथानन्तरं राजसूयैकदेशभूतचरकसौत्रामणी उच्यते । सौत्रामण्या तन्त्रवत्सा उच्यन्ते । चरकसौत्रामणीमन्त्राणामृष्यादिकमभिधीयत इत्यर्थं राजसूयान्ते विहितसौत्रामण्याश्चरकसौत्रामणीति संज्ञा ॥

अश्विनोरार्षम् ॥

अस्यामन्त्राणामश्विनावृषी इत्यर्थं ॥

अश्विभ्यां त्रीणि लिङ्गोक्तानि ॥

अश्विभ्यां पच्यस्वेत्यादीनि त्रीणि यजूंषि लिङ्गोक्तदेवतानि । षड्देवतानीत्यर्थ. पाटनञ्च विरुढचूर्णानां च संसर्गे विनियुक्तानि । अश्विभ्यां । यजुर्गायत्री, सरस्वत्यै यजुरुष्णिक् इन्द्राय । यजुर्बृहती ॥

वायुः सौमी गायत्री ॥

वायु पूत इत्येषा सोमदेवत्या गायत्री । अत्र तृतीय सप्ताक्षरत्वेनैकोना । यकारव्यूहेन पूरणमिति केचित् । कुम्भे परिस्रुत्स्थापने विनियोग ॥

कुविदङ्गर्च॰ सुकीर्तिः काक्षीवत ॥

कुविदङ्गेत्येतदृचं काक्षीवतोऽपत्य सुकीर्तिरपश्यत् ॥

आद्या सौम्यनिरुक्ता त्रिष्टुप् ॥

अस्मिन् तृचे आद्या कुविदङ्गेत्येषा त्रिष्टुप अनिरुक्ता सोमदेवत्या । मध्ये सोमपदप्रयोगरहितेत्यर्थं ग्रहणेऽस्या विनियोग अत्र द्वितीयस्य व्यूहेन पूरणं । उपोपयामेति यजु । तस्य ग्रहो देवता एकपदग्रहणपक्षे द्वाविंशत्यक्षरा साम्नीत्रिष्टुप । ग्रहणे विनियोग । त्रयाणां ग्रहाणां ग्रहणपक्षे तु त्रीण्येतानि यजूंषि सोपयामानि । तत्र प्रथमस्य यजुस्त्रिष्टुप् । द्वितीयस्यासुर्यनुष्टुप । तृतीयस्य साम्नी-

सर्वेषां चयनमन्त्राणां साधारणमृषिमाह ॥

**अथाग्निं प्रजापतिरपश्यत् ॥**

अथानन्तरं प्रजापतिरृषिरग्निं अग्निसञ्ज्ञकम् कर्मापश्यत् । अत्राग्निपदेन तन्मन्त्रा लक्ष्यन्ते । तेन युञ्जानइत्यतआरभ्याष्टाध्यायी अग्निमन्त्राः । तेषां सर्वेषां प्रजापतिरृषिरित्यर्थः अत्र ग्रन्थे दर्शपूर्णमासाग्निष्टोमादिपदैस्तन्मन्त्रा लक्ष्यन्त इति कात्यायनाभिमतम् । यतः तत्र एव परमेष्ठीप्राजापत्यो यज्ञमपश्यद्दर्शपूर्णमासाविति श्रुतौ सति परमेष्ठीप्राजापत्यो दर्शपूर्णमासमन्त्राणामृषिरिति दर्शपूर्णमासपदस्य तन्मन्त्रपरतां सूचितवान् । अत सर्वत्र कर्मपदग्रहणैस्तन्मन्त्रा लक्ष्यंते ।

**साध्या वाऽपश्यन् ॥**

अग्निमित्यनुवर्त्तते । अथ वा साध्याऋषयः प्रजापतेः प्राणभूता अग्निमपश्यन् । दृष्टवन्तः अतो विकल्प अग्निमन्त्राणां प्रजापतिरृषिः साध्या वा ऋषयइति प्रतिचिति ऋषिभेदं वक्ष्यन्ते. पञ्चचितिवासमाह ॥

**सोऽग्निः पञ्चचितिकः ॥**

---

२० । ४० । कदाचनस्तरीरसि अष्टमे चामसद्य तानस्तोऽसि सुशर्मऽसीत्येका बृहस्पतिसुतस्य चतस्रो हरिरसि द्वे युद्धाशानस्तन्द्राभिरित्येका यस्मान्न द्वे ऽअग्नऽआयूंष्यग्ने पवस्वोत तन्नोजसाऽअदृश्रमस्येत्युद्गिचित्रन्देवा ॥ विनो बाचस्पतिं विश्वकर्मन्हविषा वावृधानो विश्वकर्म्मन्हविषा वर्धनेनैका ऽअग्नये त्वा चतस्रोऽग्ने द्वाविंशंशतिर्द्वात्रिंशं शत । ग्राणाय मे पञ्चोदुत्यञ्च समिन्द्र णोऽम मा हिंसीतस्ऽएजत् दशमास्य. पञ्चाजिघ्र षट्परमेष्ठिनव नवमे सप्त षट्चत्वारिंशं शत । १ । ७ । ४६ । देव सवितः षडिन्द्रस्य वज्र सप्त देवस्य त्वा त्रयोदशाग्नये पञ्च वाजस्येमप्रगाग्निरेकक्षरेण चतस्रो दशमे षट्त्रयश्चत्वारिंशं शत । १० । ४३ । एषतऽअग्ना देवाश्चतुष्को सविता त्वा तिस्रः सोमस्य त्वाष षड्वेष्टा सप्त सोमस्य त्वा य ऽइन्द्रस्य वज्रः पञ्च श्येनोऽसि षट् सावित्रा द्वे ऽआश्विभ्यां चतस्रऽएकादशमे दश सप्त चत्वारिंशं श. त । ११ । १० । ४० । इत्यनुवाकसूत्राणि ॥

अथाग्निः प्रजापतिर्दृष्टवान् भाष्या वा दृष्टवन्तः सोऽग्निः पञ्चचितिको वर्तते । पञ्च चितयो यस्यासौ पञ्चचितिकः. अथ प्रतिचित्यृषीनिदमाह ॥

प्रथमा चितिः प्रजापतेः ॥

प्रथमचितिमन्त्राः प्रजापतेरार्षमिति शेषः । "प्रजापतिः प्रथमां चितिमपश्यत्प्रजापतिरेव तस्या आर्षेयमिति श्रुतेः" ॥

द्वितीया देवानाम् ॥

आर्षं द्वितीयचितिमन्त्राणां देवा द्रष्टार इत्यर्थः । देवा द्वितीयां चितिमपश्यन्नित्यादिश्रुतेः ॥

तृतीयेन्द्राग्न्योर्विश्वकर्मणः ॥

आर्षमिति शेषः । तृतीयचितिमन्त्राणां इन्द्राग्नी विश्वकर्मा चैवैते त्रय द्रष्टार इत्यर्थः. इन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यन्नित्यादिश्रुतेः ॥

चतुर्थ्यृषीणाम् ॥

आर्षमिति शेषः । चतुर्थचितिमन्त्राणां ऋषयो द्रष्टार इत्यर्थः । "ऋषयश्चतुर्थीं चितिमपश्यन्नित्यादिश्रुतेः" ॥

पञ्चमी परमेष्ठिनः ॥

आर्षमिति शेषः । पञ्चमचितिमन्त्राणां परमेष्ठी द्रष्टेत्यर्थः । "परमेष्ठी पञ्चमीं चितिमपश्यदित्यादिश्रुतेः" ॥

अथ प्रतिकर्मदर्शिनः ॥

अथ साधारणार्षाभिधानानन्तरं प्रतिकर्म कर्मकर्म प्रति ये दर्शिनो द्रष्टारः सन्ति तेषां न सावित्राण्यपश्यदित्यादिकाः । प्रतिचितिमन्त्राणामृषयस्तेऽभिधीयन्त इति शेषः ॥

युञ्जानोऽष्टौ सावित्राणि सविताऽपश्यत् ॥

युञ्जान प्रथममित्यादीन्यष्टौ यजूंषि अष्टौ कण्डिकाः सावित्राणि सवितृदेवत्या नि सवितैवापश्यत् । दृष्टवान् "सवितैतानि सावित्राण्यपश्यदिति श्रुतेः" । उखासम्भरणाद्यो अष्टगृहीतस्य मेऽष्टानां विनियोगः । सवितारं तत्र प्रसवमपि निर्दिष्टोऽष्टाभिर्यजुर्भिर्जुहोतीति श्रुतावोऽयत्युद्गानिधानेन ॥

आद्या तृतीया वाऽनुष्टुप् ॥

युञ्जानादष्टानां मध्ये आद्या युञ्जानस्यैव तृतीया, युक्त्वाय स वितैरयेषा वाऽनुष्टुप् आद्याया तृतीयः समाक्षरः चतुर्णां व्यूहेन पूरणं तृतीयायां द्वितीयः समाक्षरः तेनैकोनं हे अपि ॥

चतुर्थीपञ्चमी जगत्यौ ॥

युञ्जते तृतीयं चतुर्थी यस्य द्वितीय समाक्षर तेनैकोनि हे अपि चतुर्थीषष्ठ्यौ जगत्यौ । युञ्जते इत्तीयं चतुर्थी, यस्य प्रयाणमिति षष्ठी, एते हे जगत्यौ पञ्चमाः प्रथमस्य व्यूहेन पूरणं । द्वितीया गायत्री, युक्तेन मनसेतीय द्वितीया गायत्री । अत्र तृतीय पदाक्षर तेनैव शङ्कुमती गायत्री भवति । एक कस्यचित्पदे छन्दः शङ्कुमती भवती पञ्चमी त्रिष्टुप्, युजे वामितीयं पञ्चमी त्रिष्टुप् । अनायाद्वितीयचतुर्थानां व्यूहेन पूरणं । समस्यास्तु मागृकम् ॥

इमं नो यजुरन्ते गायत्र्यनवसाना ॥

इमं नो देव सवितरित्येतदवसानान्तं यजु व्यूहेन प्रजापत्या जगती । अन्य यजुषीऽन्ते, ऋचा स्तोममित्येषा गायत्री अनवसाना अवसानरहिता । आदि यजुरस्ता यस्या अन्ते स्वाहेति पृथक् यजुः । अत्र देवस्य त्वेत्यस्य प्रजापतिसाध्या वा ऋषयः अभ्रयादाने विनियोगोवेति विशेषः ॥

आददेऽग्निः ॥

माददे गायत्रेत्यस्याश्विदेवता भि धृतिश्छन्दः । १६ । अभ्रयाऽदाने विनियोगः ॥

हस्तोऽनुष्टुव्यजुरन्ता ॥

हस्तऽआधायेत्ययमनुष्टुप् यजुरन्ता । अस्या अन्ते आनुष्टुभेनैनि यजुः । तच्च यजुस्त्रिष्टुप्छन्दः ॥ ११ ॥ हस्तऽइत्यस्यास्तृतीयचतुर्थौ· ब्यूहेन पूरणं । अभ्यभिमन्त्रणे ।वन्हिदीमः । अस्या अग्निरेव देवता । अभ्रिरित्यत्र पुष्पसूनाटसूत्रेतः ॥ १ ॥

प्रतूर्त्तन्नाभानेदिष्टऽआश्वीमास्तारपङ्क्तिः ॥

प्रतूर्तं वाजिन्निति भामृच अश्वदेवत्या आस्तारपङ्क्तिछन्दस्का नाभानेदिष्टऋषिदृष्टा । अस्याअस्यां पादौ द्वादशकौ आद्यद्वितीयावष्टकौ सा आस्तारपङ्क्तिः । "अन्त्यौ चेदास्तारपङ्क्तिरित्युक्तेः." अश्वाभिमन्त्रणे विनियोगः ॥

युञ्जाथां कुश्रिगार्दभीं गायत्रीम् ॥

युञ्जाथाᳪ रासभमित्येषा ऋच गर्दभदेवता गायत्रीकुश्रिऋषिदृष्टा । गर्दभाऽभिमन्त्रणे विनियोगः ॥

योगेयोगे शुनःशेपऽआजीम् ॥

गायत्रीमित्यनुवर्त्तते । योगेयोगऽइतीमामृचं अजदेवत्यां गायत्रीछन्दस्कां शुनःशेपऋषिरपश्यत् अनाभिमन्त्रणे विनियोगः ॥

प्रतूर्वन्त्रिष्टुब्विराड्रूपायजुर्गर्भा ॥

प्रतूर्वन्नेतक्रामन्नितीयं विराड्रूपा त्रिष्टुप् यजुर्गर्भा । यजुर्मध्ये मन्दूर्धयोरन्तराले यस्या सा यजुर्गर्भा । यस्यास्त्रयः पादा एकादशाक्षरा एको द्वादशाक्षरः । सा विराड्रूपा एकादशिनस्त्रयोऽष्टकश्च विराड्रूपेत्युक्तेः । अत्र तृतीयो द्वादशाक्षरः तेनैकाधिका अस्याः पूर्वार्द्धस्य अश्वस्य प्रायुक्तमणे विनियोगः यजुर्गर्भेत्युक्तं किं तद्यजुरि·

स्यपिधायामाह। तत्र यजुः उर्वन्तरिक्षं वीहीत्येतावत्परिमाणमस्या मध्ये यजुरित्यर्थः रासभोत्क्रमणेऽस्य विनियोगः दैवीजगती ॥

पृथिव्यास्त्रीण्याग्नेयानि ॥

पृथिव्याः सधस्थादित्यादीनि त्रीण्यग्निदैवत्यानि यजूंषि। पृथिव्याः आसुरीगायत्री। अजस्य मागत्क्रमणे विनियोगः, अग्निं पुरीष्यमङ्गिरस्वदच्छेमस्त्वस्य साम्नगायत्री। चित्तं प्रति गमने विनियोगः । अग्निं भरिष्यामस्त्यासुर्यनुष्टुप् । अनड्वत्पुरुषेऽनये विनियोगः ॥

अन्वग्निराग्नेयी त्रिष्टुभं पुरोधमः ॥

अन्वग्निरुषसामित्येतामृचमग्निदैवत्यां त्रिष्टुभं पुरोधनतत्त्व योऽपश्यत् । वल्मीकवपाच्छिद्रेण पिंडेऽपये विनियोगः । अत्र प्रथमपादस्य व्यूहेन पूरणम् ॥

आगत्य मयोभुव आन्वीमनुष्टुभम् ॥

आगत्य वाजीतीमामृचमश्वदेवतामनुष्टुभं मयोभुवऋषयोऽपश्यन् । अश्वाभिमन्त्रणेऽस्या विनियोगः अत्रापि प्रथमस्य व्यूहेन पूरणम् ॥

आक्रम्यानुष्टुप् ॥

आक्रम्य वाजिन्नित्येषाऽनुष्टुप् । अश्वदेवत्या आर्षी पदानुवृत्तेः। अश्वपादेन पिण्डस्याभिक्षापने विनियोगः ॥

द्यौस्ते बृहती ॥

द्यौस्ते पृष्ठमित्येषा बृहती । अश्वदेवत्या । अश्वस्योपरि पाणिं धारयतवचारणे विनियोगः । द्यौस्ते पृष्ठमित्येषा आर्षी बृहती । पादानामनियताक्षरत्वेऽपि षट्त्रिंशदक्षरत्वात् । व्यूहेन छन्दः पूर्तिः ॥

उत्क्राम विराट् ॥

अत्राप्याग्नेयीत्यनुवर्तते उदक्राम महतस्त्रयो या आग्नेदैवत्या विराट्छन्दस्का । यस्या दशाक्षरास्त्वारः पादाः सा विराट्पङ्क्तिः,, वैराजे विराडित्युक्तेः" अत्र द्वितीयएकादशकः । तेनैकाधिका अग्नेरुत्क्रमणे विनियोगः॥

## उदक्रमीत्त्रिष्टुप् ॥

आग्नेयीत्यनुवर्तते । उदक्रमीद्द्रविणोदा इतीयमृक् आग्नेदैवत्या त्रिष्टुप् अग्नाभिमन्त्रणे विनियोगः॥

## आत्वा द्वे गृत्समद आग्नेय्यौ ॥

आत्वा जिघर्मि आविश्वत इत्येमे द्वे ऋचौ अग्निदैवत्ये गृत्समदऋषिरपश्यत् । आत्वेत्याद्यास्त्रिष्टुप्छन्दः आविश्वत इत्यस्या अपि त्रिष्टुप्छन्दः त्रिष्टुप्पदात्मकत्वः अत्र "अन्त्रिष्टुभो तेनेन्द्र इति तु तेथ" । व्यूहेन छन्दः पूरणं द्वितीयस्याः अग्न्यपदे सत्विषडस्योपरि आज्याहुतिहोमे विनियोगस्तयोः ॥

## परिसोमको गायत्रीम् ॥

आग्नेयीपदमनुवर्तते । परिवाजपतिरितीमामृचमग्निदैवत्यां गायत्रीछन्दस्कां सोमकऋषिरपश्यत् । अथ परिलेखे विनियोगः । अत्र द्वितीये व्यूह. ॥

## परि त्वा पायुरनुष्टुभम् ॥

आग्नेयीपदमनुवर्तते परित्वाऽग्ने पुरमितीमामृचमग्निदैवतामनुष्टुप्छन्दस्कां पायुऋषिरपश्यत् । पिण्डपरिलेखने विनियोगः ॥

## त्वमग्ने गृत्समदस्त्रिष्टुभम् ॥

आग्नेयीत्यनुवर्तते । त्वमग्ने द्युभिरितीमामृचमग्निदैवत्यां त्रिष्टुप्छन्दस्कां । गृत्समदऋषिरपश्यत् । अत्र प्रथमान्त्यौ एकादशकौ द्वितीयतृतीयौ नवाक्षरौ । एवं चत्वारिंशदक्षरा इयं मत

ष्टरेव । यदा च तृतीयचतुर्थौ दशाक्षरौ क्रियेते तदेयं विराट्स्थाना त्रिष्टुब् भवति । द्वौ वा वैराजौ नवकावित्येष भेद विराट्स्थानेत्युक्तत्वात् । तथा च काण्वसंहिताभाष्ये । त्वामग्नऽइतिगुत्समदऽआग्नेयी त्रिष्टुप्पङ्क्ति । सर्वजगतोमित्यपि पाठोऽस्त्येव । चत्वे दानुक्रमण्यामपीयं अग्नग्नैवोक्तास्ति । तदा त्वां मत त्वमग्ने' अग्ने सुवमग्नऽइत्येवं सप्तभिर्व्यूहैः । सप्ताक्षराणि संपद्यन्ते । ततश्चतुर्भिरित्येषां व्यूह एवं जगती सम्पद्यते । तथा च छन्दोगानां त्वमग्ने त्वतुमग्ने पूरुषऽइति । तदा त्वमग्ने गृत्समदो जगतीमित्यपि पाठो भवत्येव । पिण्डपरिलेखनेऽस्या अपि विनियोग. ॥ २ ॥

## पृथिव्याऽआग्नेयम् ॥

देवस्य त्वेत्यस्य प्रागुक्त । अथ प्रजापतिऋषिः पिण्डखनने विनियोगइति विशेष. पृथिव्याः सधस्थादित्येतद्यजुरग्निर्देवतम् । व्यूहेना त्युष्टिक्छन्दः । अभ्या पिण्डखनने विनियोगः ॥

## अपां पुष्करपर्णं स्वराट्पङ्क्तिः ॥

अपां पृष्ठमसीत्यस्याः पुष्करपर्णं देवता । स्वराट्पङ्क्तिश्छन्दः । द्व्यक्षराधिकं सर्वं छन्दः विराडित्युच्यते "द्वाभ्यां विराड्स्वराजाविधु-रौः।"आद्यौ पादौ दशकौ । अंत्यावेकादशकाविति पङ्क्तेर्द्व्यक्षराधिकत्वादिराड्त्वं युक्तं । तथा च छन्दोगानां दृव्यधिका स्वराडिति । अस्याः कृष्णाजिनस्योपरि पुष्करपर्णास्तरणे चतुर्णां पादानां विनियोग । द्वितो मात्रयेत्यस्य चतुर्थपादस्य विमार्जने ॥

## शर्म हे अनुष्टुभौ कृष्णाजिनपुष्करपर्णे ॥

शर्म च स्थः, संवसाथामितीमे द्वे ऋचावनुष्टुभो अनयोः कृष्णाजिनपुष्करपर्णे देवते । कृष्णाजिनपुष्करपर्णयोरभिमर्शने विनियोग

पुरीष्योऽग्नि ॥

पुरीष्योऽसि विश्वभरा इत्यस्याग्निर्देवता पिण्डाभिमर्शने विनियोगोऽस्य । इयं प्रतिष्ठागायत्री । अत्र प्रथमोऽष्टक द्वितीय सप्तक तृतीय षट्क । "षडो सप्तकश्चेति प्रतिष्ठेति पिंगलः" । कात्यायनोऽपि । यस्यास्तु प्रथमसप्तकाष्टका सा वर्द्धमाना विपरीताप्रतिष्ठेति । छन्दोगानां च । अष्टसप्तषड्भिः प्रतिष्ठेति ॥

त्वामग्ने द्वचं भरद्वाजमाग्नेयम् गायत्रम् ॥

त्वामग्ने पुष्करात्, तमु त्वा दध्यङ्, तमु त्वा पाथ्य, इत्येतत्तृचमग्निदैवतम् गायत्रीछन्दस्कं भरद्वाजऋषिरपश्यत् । पिण्डपरिग्रहणे विनियुक्तं । तमु त्वा दध्यङ्ङस्य व्यूहेन पूरणम् । तमु त्वा पाथ्य इत्यस्यापि ॥

सीद होतर्देवश्रवा देववातश्च त्रिष्टुभम् ॥

आग्नेयपदमनुवर्त्तते । तत्राग्नेयोऽसिनिविधिरिणस्य सन्ध्यर्त ॥

सीद होतः स्व उ लोक इतीमामृचमग्निदेवत्यां त्रिष्टुभम् ॥

देवश्रवादेववातावेतीमां ह्यानवी अपश्यताम् ॥

नि होता गृत्समद ॥

त्रिष्टुभमाग्नेयमिति चानुवर्तते नि होता होतृषदनमितीमामृचं अग्निदेवत्यां त्रिष्टुप्छन्दस्कां गृत्समदऋषिरपश्यत् ॥

सं॰ सीदस्व प्रस्कण्वो बृहतीम् ॥

सं॰ सीदस्वेतीमामृचं अग्निदेवत्यां बृहतीं प्रस्कण्वऋषिरपश्यत् । अत्राप्याग्नेयपदमनुवर्तते । यकारविकर्षेण तृतीये द्वादशाक्षरपूर्त्तिः । त्वामग्न इत्यादिषड्ऋचस्य पुष्करपर्णे पिण्डनिधाने विनियोग इति केचित् ॥ २ ॥

अपो देवीः सिंधुद्वीपऽआपी न्यङ्कुसारिणीम् ॥

अपो देवीरित्यस्या न्यङ्कुसारिणीबृहतीछन्दः अपो देवता सिन्धुद्वीपऋषिरपश्यत् । यस्या द्वितीयपादो द्वादशाक्षरः तस्य व्यूहेन पूरणम् । तृतीयो नवाक्षरः अभ्रे अपामवनयनेऽस्या विनियोगः ॥

अग्नो त्रिष्टुप्पार्थिवोऽर्द्धो वायव्योऽर्द्धः ॥

अग्नो वायुरित्यस्यास्त्रिष्टुप्छन्दः । अस्याः पूर्वोऽर्द्धः पार्थिवः पृथिवीदेवतः अपरोऽर्द्धो वायव्यः वायुदेवतः अवटमध्ये वायुप्रक्षेपे विनियोगः । अत्र चतुर्थ एकादशकः । तस्य व्यूहेन पूरणं वा एकोना वा ॥

सुजातोऽनुष्टुबाग्नेयी ॥

सुजातो ज्योतिषेत्यनुष्टुबग्निदेवत्या कृष्णाजिनपुष्करपर्णयोरन्ते ग्रहणे विनियुक्ता । अत्र द्वितीयो नवकस्तेनैकाधिका ॥

उदु तिष्ठ विश्वमनाः पथ्याबृहतीम् ॥

आग्नेयीमनुवर्त्तमान आग्नेयीमिति विपरिणमते अर्थवशाद्विभक्तिविपरिणाम इति न्यायात् । एवं सर्वत्र ज्ञेयं । उदु तिष्ठ स्वध्वरेतीमामृचं पथ्याबृहतीछन्दस्कां विश्वमना ऋषिरपश्यत् । चतुर्थं बृहती तृतीयो द्वादशक इति बृहत्येवात्र पथ्याबृहतीत्युच्यते । पथ्यापूर्वे चेत्तृतीय इति पथ्यालक्षणत्वात् । पिण्डमादायोत्थापने विनियोगः । अत्राद्ययोर्व्यूहेन पूरणम् ॥

ऊर्द्ध्वः कण्व उपरिष्टाद्बृहतीम् ॥

आग्नेयीमिति वर्त्तते ऊर्द्ध्वकण्व इमामृचमग्निदेवतामुपरिष्टाद्बृहतीमपश्यत् । अन्त्ये चेदुपरिष्टाद्बृहत्युच्यते । "अन्त्ये चेदुपरिष्टाद्बृहतीत्युक्तेः" । पिण्डस्य प्राक्प्रग्रहणेऽस्या विनियोगः ॥

स जातस्त्रिष्टुभम् ॥

अश्माभिमन्त्रणे विनियोगः । अत्राप्याग्नेयीत्यनुवर्तते अत्र ह्यक्षोऽ धीकन्या स्तूयते । अत्र प्रथमतृतीययोर्व्यूहेन पूरणम् ॥

स्थिरो रासभेय्यनुष्टुब्व्युग्रा ॥

स्थिरो भवेतीयमृग्रासभेयी रासभदेवत्या अनुष्टुप् च व्युग्रा । त्रिपदत्वादिकस्य । यथायथा पादयोर्वर्णादिशब्द्यूनमभवेऽपि वै- कल्पिकं दृश्याधिकोऽपि समाह । अतएव प्रायतं । व्यूहेन पूरणी संभवत्यपि एकद्व्याधिकन्यूनत्वादिना छन्दोभारं दिवासेन कल्पतेइ- ति । रासभाभिमन्त्रणेऽस्य विनियोगः ॥

शिवो भवाजो पथ्याबृहती ॥

शिवो भव प्रजाभ्यइतीयमजदेवत्या पथ्याबृहतीछन्दस्का । अत्र प्रथमः सप्तकः । द्वितीयोऽष्टकः । तृतीयोऽष्टकः । चतुर्थोऽपि व्यू- हेन नवकइति । अनुष्टुब्बृहतीवेति संहिताभाष्ययोः । अजाभिम- न्त्रणे विनियोगः ॥

प्रैतुलिङ्गोक्ता महापङ्क्तिस्त्र्यवसाना ॥

प्रैतु वाजीत्येषा लिङ्गोक्तदेवता महापङ्क्तिछन्दस्का । त्र्यवसाना अवसानत्रयोपेता । आद्यावर्द्धर्चावश्वदेवत्यौ । तृतीयोऽर्धर्चो रासभदे- वतइति लिङ्गोक्तशब्दार्थः । अत्र तृतीयचतुर्थौ व्यूहेन पूरणीयौ । एवं षडपि पादा अष्टाक्षराः सन्ति अतो महापङ्क्तिरियं । "षडष्टका- या महापङ्क्तिरित्युक्ते" आद्यार्द्धर्चयोरश्वस्योपरि पिण्डग्रहणे वि- नियोगः तृपाग्निमित्यस्य खरस्योपरि पिण्डधारणे विनियो- गः ॥

अग्ने गायत्र्येकपदाग्नेयी ॥

अग्नआयाहीतीयमेकपदा गायत्री अग्निदेवत्या । खरात्पिण्डस्य प्रत्याहरणे विनियुक्ता ॥

ऋतमग्निमाग्नेयं ॥

ऋतमृचं० सत्यं । अग्निं पुरीष्यमित्यैने यजुषी आग्नेये अग्नि-देवते । ऋतमिति प्राजापत्या गायत्री । अजस्योपरि पिण्डमयने विनियुक्ता । अग्निं पुरीष्यं । साम्नगायत्रीपदमपुरुषेपनये विनियोगः ॥

ओषधयस्त्रिष्टुबनुष्टुभावोषधिदैवत्ये ॥

ओषधयः प्रतिमोदध्वं, ओषधयः प्रतिगृभ्णीतेतीमे ऋचौ क्रमेण त्रिष्टुबनुष्टुप्छन्दस्के ओषधिदैवत्ये । परिवृतमध्ये पिण्डनिधानेऽत्र यो न प्रथमाया द्वितीयो द्वादशकः तृतीया दशकः प्रथमान्त्यावेकादशकौ । तेन पूर्वेव त्रिष्टुप् । द्वितीयो द्वादशकः तृतीया दशकः प्रथमान्त्यावेकादशकौ । तेन पूर्वेव त्रिष्टुप् । द्वितीयायाः पञ्चमो नवकः अन्ये षट्का तेनैकाधिका । परिवृतमध्ये पिण्डनिधाने विनियोगः उभयोः ॥

व्यस्यन्नाग्नेयोऽर्द्धर्चः ॥

व्यस्यन्विश्वाइत्ययमर्द्धर्चोऽग्निदैवतः ॥

विपाजसोत्कीलः कात्य आग्नेयीं त्रिष्टुभम् ॥

विपाजसा पृथुनेतीमामृचमग्निदेवत्यां त्रिष्टुप्छन्दस्कां कात्यः कतस्य पुत्रः उत्कीलो नामऋषिरपश्यत् । योक्त्राद्यस्य पिण्डस्य विमोचने विनियोगः ॥ ४ ॥

आपो ह्यापठं० सिन्धुद्वीपस्तृचं गायत्रम् ॥

आपो हि ष्ठेतीदं तृचं अब्देवतं गायत्रीछन्दस्कं सिन्धुद्वीपऋषिरपश्यत् पर्णकषायपक्वोदकस्य पिण्डस्योपर्यासेके विनियुक्तम् ॥

मित्रउपरिष्टाद्बृहती मैत्री ॥

मित्र सठं०मृज्येतिमित्रोदेवता उपरिष्टाद्बृहतीछन्दः अङ्गुलीभिः

पिण्डस्य संसर्जने विनियोगोऽस्याः अत्र चतुर्थं सप्तकः । तेनैकोना यकारव्यूहो वा ॥

रुद्राऽअनुष्टुब्रौद्री ॥

रुद्राः सर्ठ॰ सृज्येत्ययमनुष्टुप्छन्दस्का रुद्रदेवत्या शर्करापोरमाश्मचूर्णं पिण्डस्य संसर्जने विनियुक्ता ॥

सर्ठ॰सृष्टां द्वे सिनीवालीदैवत्ये ॥

सर्ठ॰सृष्टामिति द्वे ऋचौ सिनीवालीदैवत्ये अनुष्टुप्छन्दस्केऽनुष्टुप्पदानुवर्तते । पिण्डमर्दने विनियोग उभयोः सर्ठ॰सृष्टामित्यत्र द्वितीयतृतीयौ सप्ताक्षरौ । अष्टावष्टौ । तेनद्व्यूना । व्यूहो वा । सिनीवालीत्यत्र द्वितीयस्य व्यूहेन पूर्तिः, उखामादित्या । अनुष्टुबित्यनुवर्तते । उखां कृणोत्वित्ययमनुष्टुबादित्या अदितिर्देवता । पिण्डमर्दनमेव विनियुक्ता अत्रापि प्रथमं सप्तकं तेनैकोना । यकारव्यूहो वा ॥

मखस्य मृत्पिण्डः ॥

मखस्य शिरोऽसीत्यस्य मृत्पिण्डो देवता । यजुरयम् मृद्दाने विनियोगः ॥

वसवस्त्वा लिङ्गोक्तानि सर्वत्र ॥

वसवस्त्वा कृण्वन्त्वित्यादीनि लिङ्गोक्तदैवतानि उखादेवतानीत्यर्थं नकेवलमत्र किंतु सर्वत्र वसवस्त्वेत्यादीनि लिङ्गोक्तदैवतानीत्यर्थः वसवस्त्वा धूपयन्तु वसवस्त्वाच्छृन्दन्त्वित्यादौ । तत्र वसवस्त्वा । एकाधिका ब्राह्मी अनुष्टुप् । उखाकरणमने विनियोगः । रुद्रास्त्वेत्यस्यार्षीमनुष्टुप् । एकाधिका । पचनमन्त्रधाने विनियोगः, आदित्यास्त्वा ब्राह्मी अनुष्टुप् । उत्तरघात्वाधाने विनियोगः विश्वेत्वा एकाधिका ब्राह्मी बृहती । समीकरणे विनियोगः ॥

अदित्यै रास्ना ॥

अदित्यै रास्ना देवताः । यजुर्गायत्री । वर्तिकरणे विनियोगः ॥

अदितिरौखम् ॥

अदितिष्टे बिलमित्यस्य उखादेवता यजुर्बृहती । उखाया बिल स्यालोके विनियोगः ॥

कृत्वायादित्योष्णिगुष्णिगनुष्टुब्वा ॥

कृत्वायसामितीयमृक् अदितिदेवत्या उष्णिक्छन्दस्का । मित्रप्राया उखायां भूमौ निधाने विनियोगः । अथ तृतीयपादे चतुर्दशकः । तेन द्व्यधिकोष्णिक् । अनुष्टुब्वा तदा च पुत्रेभ्यः प्रायच्छदिति तृतीयः पादो व्यूहेन पूरणीयः उष्णिगनुष्टुब्वेति संहिताभाष्ययोः पाठोऽस्ति । अथ वसवस्त्वा धूपयन्त्वित्यादीनि सप्त यजूंषि उखायां धूपने विनियुक्तानि । तेषां देवतोक्ता प्रागुक्ता । छन्दांस्युच्यन्ते वसवस्त्वा ऋग्गायत्री । रुद्रास्त्वा । व्यूहेनार्षीगायत्री । आदित्या ऋग्गायत्री । विश्वे त्वा । व्यूहेन सामजगती । इन्द्रस्त्वा यजुरुष्णिक् । वरुणस्त्वा यजुरनुष्टुप् । विष्णुस्त्वा । यजुरुष्णिक् ॥

अदितिरावटम् ॥

अदितिष्ट्वा देवीत्येतद्यजुरवटदेवतम् । व्यूहेन प्राजापत्यात्रिष्टुप् अवटखनने विनियोगः ॥

देवानां पञ्चौखानि ॥

देवानां त्वा पत्नीरित्यादीनि पञ्चौखानि । एषामुखादेवतेत्यर्थः । अथ देवानां त्वा । प्राजापत्या त्रिष्टुप् । उखावधाने विनियोगः । धिषणास्त्वा । प्राजापत्यात्रिष्टुप् उखाया आदीपने विनियोगः वरूत्रीः ऋग्बृहती, ग्नास्त्वा । सामजगती । जनयस्त्वा ऋचं । पङ्क्तिः वरूत्रीरित्यादीनां त्रयाणामुखामीक्षमाणस्य जपे विनियोगः ॥

गुनिकएव प्राजापत्यादिवदपि. चौदुम्बरमण्यहोमे विनियोगइतिवि-शेषः ॥

मासौव्यौ गायत्रीत्रिष्टुभौ ॥

मा सु भित्था । इत्यं० इत्य देविद्ित्येते ऋचौ चौव्यो उषादेवत्योक्रमे-ण गायत्रीत्रिष्टुप्छन्दस्कौ ॥

अग्निश्च पाद आग्नेयः ॥

मासित्थस्यामृचिपमिग्नेद करिष्यथइत्ययं पादोग्निदेवतः । मा सु भित्थाइतिहयोरुखाधिश्रयणे विनियोगः ॥

द्रुहंनः सोमाहुतिराग्नेयीं गायत्रीम् ॥

द्रुनः सर्पिरितीमामृचमग्निदेवत्यां गायत्रीछन्दस्कां सोमाहुति-र्ऋषिरपश्यत् । कार्मुकसमिदाधानेऽस्या विनियोगः । अनाद्ययोर्व्यू-हेन पूरणम् ॥

परस्या विरूपऽआङ्गिरसः ॥

गायत्रीमित्यनुवर्त्तते । परस्याऽअधीतीमामृचमग्निदेवत्यां गायत्री-छन्दस्कां अङ्गिरसोऽपत्यंविरूपऋषिरपश्यत् । वैकंकतसमिदाधानेऽ-स्या विनियोगः द्वितीयस्य व्यूहेन पूरणम् ॥

परमस्याऽआरुणिरनुष्टुभम् ॥

परमस्याइतीमामृचंअग्निदेवतामनुष्टुप्छन्दस्कामारुणिऋषिरप-श्यत्औदुम्बरसमिदाधाने विनियोगः ॥

यदग्ने हे जमदग्निः ॥

अनुष्टुभमित्यनुवर्त्तते, यदग्ने, यदत्तीत्यृग्द्वयमग्निदेवत्यं अनुष्टुप्-छन्दस्कं जमदग्निऋषिरपश्यत् । यदग्नइत्यस्या परशुवृक्णसमि-दाधाने विनियोग । अत्र चतुर्थः समाचरः तत्र व्यूहो वा एकोना वा, यदत्त्युपैत्य साधशयसमिदाधाने विनियोगः । तत्र प्रथमचतुर्थयो:

व्यूहेन पूरणम् ॥

अहरहर्नाभानेदिष्ठस्त्रिष्टुभौ ॥

अहरहरप्रयावम्, नाभा पृथिव्या इतीमे ऋचौ त्रिष्टुप्छन्दस्के अग्निदेवत्ये नेदिष्ठऋषिरपश्यत् । अथवा नाभानेदिष्ठ इत्येव पश्यात्कर्म विनाम । मतुक्तं नाभानेदिष्ठ इत्येव तथा दर्शनात् । अहलिंगत्व तु त्रिष्टुभाविति द्विवचनमाम्नायते । यज्ञायज्ञसमिदाधाने उभयोर्विनियोग नाभा पृथिव्या इत्यस्यां द्वितीयचतुर्थौ पादौ जागतौ । तथाप्येषा त्रिष्टुबेव । जगती द्वौ तु जागतौ यस्याः सा जागतीजगतीत्रिष्टुभि त्रिष्टुबिति परिभाषणात् ॥

या सेनाऽ अनुष्टुभ ॥

तत्र या सेना इत्याद्या सर्वा ऋचोऽनुष्टुप्छन्दस्का । सर्वा आग्नेय्य एव स्वाध्यायाद्या सर्वा समिदाधानकारणमन्त्ररूपा ऋचोऽग्निदेवत्याः तत्र या सेना इत्यस्याः प्रथमः सप्तकः । द्वितीयचतुर्थौ नवकौ तृतीयोऽष्टकः । इत्थं या । तत्र प्रथमः षट्कः द्वितीयः सप्तकः । अत्र व्यूहो वा । अन्त्यावष्टकौ । द्व्यूना । ये जनेषु । तृतीये व्यूहः, संश्लिष्ट । आद्य षट्कः । द्वितीयतृतीयौ सप्तकौ । चतुर्थो नवकः । उद्देशः । द्वितीयचतुर्थौ सप्तकौ । द्व्यूना । पूर्वं या सेना अनुष्टुभ इत्युक्तम्, तथात्वा या विशेषमाह ॥

अन्त्योपरिष्टाद्बृहती ॥

या सेना इत्यादीनामन्ते भवा अन्त्या अथवा अध्यायस्यान्त्या । अभवतेऽन्नस्येत्येषोपरिष्टाद्बृहती, अस्या अन्त्य पादो द्वादशक आद्यास्त्रयोऽष्टकाः सोपरिष्टाद्बृहती । "अन्त्यश्चेदुपरिष्टाद्बृहती"त्युक्तेः । एतस्यास्समिदाधाने विनियोग । न त्वनुष्टुप् । या सेनाः इत्यादीना ऋषिरग्निरूप एवास्य अनुक्तत्वात् ॥ ६ ॥

## दृग्नानो वत्सप्रीस्त्रिष्टुभए रौक्मीम् ॥

दृग्नानो रुक्मइतीमामृचं त्रिष्टुप्छन्दस्कां रौक्मीं रुक्मदेवतां वत्सप्रीऋर्षिरपश्यत् । रुक्मप्रतिमोचने विनियोगोऽस्याः । अत्र प्रथमस्य व्यूहद्वयेन पूरणम् । द्वितीयो दशकः तेनैकोना ॥

## नक्तोषासा कुत्सऽआग्नेयीम् ॥

त्रिष्टुभमित्यनुवर्त्तते । नक्तोषासा समनसेतीमामृचमग्निदेवत्यां त्रिष्टुप्छन्दस्कां कुत्सऋषिरपश्यत् । नक्तोषेत्यर्द्धर्चेनेष्ठकामुखापरिग्रहणे विनियोगः, धात्रा धारेत्यस्य पादस्योखाहरणे । देवाऽअग्निमित्यस्य पादस्यासन्द्यामुखानिधाने ॥

## विश्वा श्यावाश्वः सावित्रीं जगतीम् ॥

विश्वा रूपाणीतीमामृचं सवितृदेवत्यां जगतीछन्दस्कां श्यावाश्वऋषिरपश्यत् । तृतीयपादे व्यूहः । अस्याः शिक्यपाशप्रतिमोक्षे विनियोगः ॥

## सुपर्णः कृतिम्नुरवसाना गारुत्मी विषघ्नी ॥

सुपर्णोऽसि गरुत्मानितीयमृक् कृतिछन्दस्का चतुरवसाना अवसानचतुष्टयुक्ता गारुत्मी गरुत्मदेवता । विषघ्नी विषहन्त्री विषापनयनकर्त्री । अशीत्यक्षरा कृतिः । अत्र त्रिसप्तत्यक्षराणि सन्ति । षट्व्यूहस्थानानि सन्ति । तेन कृतेरेकोनाशीत्यक्षरैयं संपद्यते । अस्याः सशिक्यस्याग्नेः प्राकप्रग्रहणे विनियोगः ॥

## विष्णोर्लिङ्गोक्तानि ॥

विष्णोः क्रमोऽसि सपत्नहेत्यादीनि दिशोऽनुविक्रमस्वेत्यन्तानि यजूंषि लिङ्गोक्तदेवतानि । उख्याग्निदेवतानीत्यर्थः । "यः सविष्णुर्यज्ञः स य स यज्ञोऽयमेव सयोऽयमग्निरुखायामिति" श्रुतेः । विष्णुक्रमणे एषां विनियोगः । त्रयाणां सर्वेषां व्यूहेन भुरिग्बृहतीछन्द. । चतुर्थस्य

प्राजापत्याबृहती । दिशोज्योतिरिति यजुरुष्णिक् । दिशामोक्षणे विनियोग. ॥

अक्रंदद्वत्सप्रीराग्नेयीं त्रिष्टुभम् ॥

अक्रंददग्निरितीमामृचमग्निदेवत्यां त्रिष्टुभम् वत्सप्रीऋषिरपश्यत् । अग्ने. पिण्डश्वसाशुरुक्मपत्वये विनियोगः । चतुर्थस्य व्यूहेन पूरणम् ॥

अग्नऽऊर्ध्वबृहती ॥

अग्नेऽभ्यावर्तिन्नित्यस्या ऊर्ध्वबृहतीछन्द, यस्यास्त्रय पादा द्वादशाक्षराः सोर्द्ध्वबृहतीत्युच्यते । "त्रिजागतोर्ध्वबृहतीत्युक्ते" । अत्र तृतीयो दशकस्तस्य व्यूहद्वयेन पूरणम् इयमग्निदेवत्या आग्नेयीत्यनुवृत्ते । अग्नेरवहरणे विनियोग. ॥

अग्ने महाबृहती ॥

आग्नेयीत्यनुवर्त्तते । अग्नेऽअङ्गिरश्शतीयमृक् । अग्निदेवत्या महाबृहतीछन्दस्का । यस्या एक पादो द्वादशाक्षर । अन्ये चतुरोऽष्टाक्षरा सा महाबृहती निष्टुबुच्यते । "चत्वारोऽष्टका जागतश्च महाबृहतीत्युक्ते" अत्राग्नेऽअङ्गिर इत्याद्यपादस्य व्यूहेन द्वादशाक्षरपूरणं । अग्नेरवहरणेऽस्या विनियोग ॥

पुनर्गायत्र्यौ ॥

पुनरूर्जा सहरय्येतीमे ऋचौ गायत्रीछन्दस्के । अग्निदेवते । आग्नेयी पदानुवृत्ते । अग्नेरवहरणएव विनियोग । पुनरित्यस्याः अन्त्यस्य व्यूहेन पूरणम् ॥

आत्वा ध्रुवोऽनुष्टुभम् ॥

आग्नेयमित्यनुवर्त्तते । आत्वा हार्षमितीमामृचमनुष्टुभमग्निदेवतां ध्रुवऋषिरपश्यत् । अभिमन्त्रणेऽस्याविनियोग ॥

उदुत्तमं० शुनःशेपो वारुणीं त्रिष्टुभम् ॥

यो व्यूहेन पूरणीयौ । शिव इत्यस्य, द्वितीयचतुर्थौ च ॥ ७ ॥

दिवस्पर्य्याग्नेयं त्रैष्टुभम् द्वादशर्चं वत्सप्रीभालन्दनः ॥

दिवस्परि प्रथममित्येतद् द्वादशर्चं अग्निदेवतं त्रिष्टुप्छन्दस्कं भलन्दनस्य पुत्रो वत्सप्रीऋषिरपश्यत् । उख्याग्नेरुपस्थानेऽस्य द्वादशर्चस्य विनियोगः, इन्धानास्त्वमित्यत्र व्यूहेन पूरणम् । विधात इति, दमाचरः, समुद्रे त्वा व्यूहः, पार्थोदसी भानुमेत्यत्र च । विभात्यग्रे । मर्त्तव्विनः दमाचरः, समुद्रे त्वा व्यूहः पार्थोदसी भानुमेत्यत्र । विभात्यग्रे । मर्त्तेष्वग्निः । इयानो वक्षा, अस्य द्वितीयो यो दमनाः, पार्तभज, त्वामग्ने इयोः । अक्षावीति व्यूहेन शतेऽपि दमनाः । एतेषु पादेषु व्यूहः ॥

समिधाग्निं विरूपाक्षऽआङ्गिरसऽआग्नेयं गायत्रीम् ॥

इतिसूत्रमिदङ्केचिन्न पठन्ति समिधाग्निमित्यत्राध्यायादेः प्राप्तत्वात् । उख्योऽग्नेःसमिदाधानेऽस्या विनियोगो वनीवाहने । अत्र विरूपाक्षऋषिस्तत्र विरूप इति नामभेदस्तुल्य पाठस्तत्परे ॥

उदुत्वा तापसोऽनुष्टुभम् ॥

उदुत्वा विश्वे देवा इतीमामृचमग्निदेवतामनुष्टुभम् तापसऋषिरपश्यत् । आसन्दीकस्योख्याग्नेरुपमने विनियोगः अत्र द्वितीयतृतीययोर्व्यूहः ॥

प्रेदनुष्टुम् ॥

प्रेदग्ने इत्यस्या अनुष्टुप्छन्दः । अग्निर्देवतापायमने विनियोगः अत्रापि द्वितीयचतुर्थयोर्व्यूहः ॥

प्रप्रायमाग्नेयीं वासिष्ठी त्रिष्टुभम् ॥

प्रप्रायमग्निरितीमामृचमग्निदेवतां त्रिष्टुप्छन्दस्कां वसिष्ठऋषि-

रपश्यत् । समिदाधानेऽस्या विनियोगः ॥

आपो देवीरापो ॥

त्रिष्टुप्पदमनुवर्त्तते । आपो देवीरित्येषा आपो ऽब्देवता । त्रिष्टुप् । भस्मनोऽप्सु प्रक्षेपे विनियुक्ता । प्रथमो द्वादशाक्षरः ॥

अप्स्वग्ने विरूपआग्नेयीं गायत्रीम् ॥

अप्स्वग्नइतीमामृचं अग्निदेवतां गायत्रीछन्दस्कां विरूपऋषिरपश्यत् । भस्मनोऽप्सु प्रक्षेपे विनियोगोऽस्याः । अत्र प्रथमे व्यूहः ॥

गर्भोऽग्निं तिस्रोऽनुष्टुभः ॥

गर्भो अस्योषधीनामित्याद्यास्तिस्रऋचोऽनुष्टुप्छन्दस्काः । अग्नि देवताः । आग्नेयीपदानुवृत्तेः । गर्भइत्यस्याप्सु भस्मप्रक्षेपे विनियोगः । प्रसद्येत्यनयोरमामिकया भस्माद्दाने विनियोगः । गर्भइत्याद्ये व्यूहः द्वितीयः सप्तकः पुनरूर्जा सहरय्येत्यनयोः शाकुलम् ॥

बोधा मे दीर्घतमास्त्रिष्टुभम् ॥

बोधामइतीमामृचं त्रिष्टुभं दीर्घतमाऋषिरपश्यत् । उपस्थानेऽस्या विनियोगः । चतुर्थे व्यूहः ॥

स बोधि सोमाहुतिराग्नेयीं यजुरन्तां गायत्रीम् ॥

स बोधि सूरिरितीमामृचं अग्निदेवत्यां यजुरन्तां गायत्रीछन्दस्कां सोमाहुतिऋषिरपश्यत् । उपस्थाने विनियोगः. तृतीये व्यूहः ॥

यजुर्वैश्वकर्मणाम् ॥

सर्वाधीत्यस्याग्रतो विश्वकर्मणे स्वाहेत्येतद्यजुर्विश्वकर्मदैवतम् । प्रायश्चित्तहोमे विनियुक्तं । दैवीजगती ॥

पुनस्त्वा त्रिष्टुबाग्नेयीम् ॥

पुनस्त्वाऽऽदित्या इतीयमृक् त्रिष्टुप्छन्दस्का अग्निदेवता । समिदाधाने विनियुक्ता । अत्राध्ययनचतुर्दशकः । द्वितीयएकादशकः । चतुः

र्षैदंत्वादयक: । द्व्यधिका ॥ ८ ॥

अपेत लिङ्गोक्तबहुदेवत्या ॥

त्रिष्टुबित्यनुवर्तते । अपेत वीतेतीयमृक् त्रिष्टुप्छन्दस्का । लिङ्गोक्ता बहवो देवता यस्या. स लिङ्गोक्तबहुदेवत्या गार्हपत्यव्यूहने विनियुक्ता.तृतीये व्यूह ॥

सञ्ज्ञानमुपदेवत्यम् ॥

सञ्ज्ञानमित्युपदेवत्यं यजु । प्राजापत्याबृहती । जपनिधापेऽस्य विनियोग: ॥

अग्ने: सिकता ॥

अग्नेर्भस्मासीत्यस्य सिकतादेवता यजुस्त्रिष्टुप् । सिकतानिवापे विनियोग' ॥

चित: परिचित: ॥

चितस्य परिचितइत्यस्य परिचितोदेवता साम्नीपङ्क्ति । परिश्रितां परिश्रयणे विनियोग' ॥

अयठं० स' पञ्चर्चमाग्नेयं त्रैष्टुभं विश्वामित्र: ॥

अयठं०सो अग्नि , अग्ने यत्ते दिवि, ।अग्ने दिवोऽर्णं,पुरीष्यास', इडामग्नइत्येतत्पञ्चर्चमग्निदेवत्यं त्रिष्टुप्छन्दस्कं विश्वामित्रोऽपश्यत् । आद्यानां चतसृणामर्द्धबृहतीनामुपधाने विनियोग', इडामग्नइत्यस्या स्विरण्युपधाने विनियोग , यदीयथेष्टिति मवाचरो ठयूहयेनपूरणीय' । येनांतरिक्षमिति चैकेन। अच्छादेवानिति च, या रोचने, यायावस्तादिति च ॥

चतुर्थ्यनुष्टुप् ॥

अग्निपञ्चर्चे चतुर्थी पुरीष्यासइत्येषाऽनुष्टुभोऽपवाद: । अथ प्रथमे व्यूह इडामग्नइत्यत्र तृतीयचतुर्थयोर्व्यूह. ॥

अयं तेऽनुष्टुप् ॥

अयं तदस्येयाऽग्निर्दैवत्याऽनुष्टुप्छन्दस्का तिरश्चयुपधानेऽस्य विनियोगः । आग्नेयपदमनुवर्त्तते । इदमपि पुनरुक्तं सूक्तं । अय ते इत्येतस्याः पूर्वमुक्तत्वात् ॥

चिद्दिष्टके ॥

चिदसि, परिचिदसीत्येते यजुषी ऐष्टके इष्टके देवते । पूर्वयोस्तिरश्चोरुपधाने विनियोगः. चिदसि प्राजापत्यानुष्टुप् । परिचिदग्निरर्कगायत्री ॥

लोकं जिगीतानुष्टुप् ॥

लोकं पृणेतीयमृक्लिङ्गोक्तदेवता अनुष्टुप् । लोकंपृणेयोऽस्यादेवतेत्यर्थं । द्वितीये त्वंशब्दे व्यूहः । लोकपृणाभिमन्त्रणे विनियुक्ता ॥

ताऽअस्यार्षी प्रियमेधऽऐन्द्रः ॥

अनुष्टुबित्यनुवर्तते । ताऽअस्य सूददोहसऽइतीमामृचमग्निदेवतानुष्टुभं ऐन्द्रः इद्रस्य पुत्र प्रियमेधसऋषिरपश्यत् । सूददोहसाभिवदने विनियोगोऽस्याः ॥

इन्द्रं जेता माधुछन्दसऽऐन्द्रः ॥

अनुष्टुभमित्यनुवर्त्तते । इन्द्रं विश्वाऽइतीमामृचं इन्द्रदेवत्यामनुष्टुभं मधुच्छन्दसोऽपत्यं जेताऽअपश्यत पुरीषनिवापेऽस्याः विनियोगः ॥

समितं चतस्रो ह्यग्निर्दैवत्या उष्णिगुपरिष्टाद्बृहत्युष्णिक्पङ्क्तयः ॥

समितं सकल्पेथा । सखा । अग्ने त्वं पुरीषो, भवतन्नदत्येतायत

स ऋचो द्व्यग्निदेवताः द्वावग्नी देवते यासां ता द्व्यग्निदेवताः । यथाक्रममुष्णिगुपरिष्टाद्बृहत्युष्णिक्पङ्क्तयः । समितमित्यस्या उष्णिक् छन्दः एकाधिकाप्युष्णिक् । अनियताक्षरपादत्वेऽप्यक्षराणामष्टाविंशतिसंख्यत्वात् । सर्वामित्यस्या उपरिष्टाद्बृहती । अथ द्वितीयः सप्तकः तृतीयो नवकः चतुर्थस्त्रयोदशकाद्द्व्येकाधिका । अग्ने त्वं उष्णिक् । इयं एकाधिका । आप्युष्णिक् अनियताक्षरपादत्वेऽप्यक्षरैस्तथात्वात् । भवतं नः पङ्क्तिः । इयमाद्याऽऽर्षीपङ्क्तिः अनियताक्षरपादत्वेऽप्यक्षरैस्तथात्वात् । उखास्थाग्नेर्गार्हपत्यचितौ स्थापने चतसृणां विनियोगः ॥

मातेवोखास्तुतिस्त्रिष्टुप् ॥

मातेव पुत्रमितीयमृगुखाया स्तुतिः उखैव देवतैकस्याः त्रिष्टुप् । उखायाः । शिक्यादिमोचने विनियोगः । अथ द्वितीयो नवकः । चतुर्थो द्वादशकः ॥ ६ ॥

असुन्वन्तं नैर्ऋतं तृचं त्रैष्टुभम् ॥

असुन्वन्तमयजमानं मम सृते । यस्यास्ते घोरमित्येतत्त्र्यृचं निर्ऋतिदेवत्यं त्रिष्टुप्छन्दस्कं नैर्ऋतीनामुपधाने विनियुक्तं । प्रथमायास्तृतीयो दशकः द्वितीयायाश्च । तृतीयाद्दशक. तृतीयस्याः प्रथमो दशकः तृतीयचतुर्थौ द्वादशकौ ॥

यन्ते यजमानदेवत्या ॥

त्रिष्टुप्पदमत्रानुवर्त्तते । यन्ते देवीति द्वितीयं यजमानदेवत्या त्रिष्टुप् । शिक्यरुक्मपाशेण्ड्वाऽऽसन्दीनां निरसने विनियुक्ता, अत्र द्वितीयादिपादत्रयं व्यूहेनैव पूर्णम् ॥

नमो विराड्भूतिदैवत्यैकपदा ॥

नमो भूत्या इत्येकपदा विराड्भूतिर्देवत्या दशाक्षरा त्रि विरा-

हिरण्यपाणी । एतौ च व्यूहेन पूर्वोत्तरस्थाने विनियोगः ॥

निवेशनऐन्द्रीं त्रिष्टुभं विश्वावसुर्देवगन्धर्वः ॥

निवेशनः सङ्गमन इत्येतामृचं इन्द्रदेवत्यां त्रिष्टुभं विश्वावसुर्देवगन्धर्वोऽपश्यत् । मामादारि भवस्य गार्हपत्यचितिदर्पणस्याग्नेरुपस्थाने विनियोगः । द्वितीये व्यूहः ॥

सीरा द्वे सीरदेवत्ये बुधसौम्यौ गायत्रीत्रिष्टुभौ ॥

सीरा युञ्जन्ति, युनक्त सीरा इतीमे ऋचौ सीरदेवत्यौ क्रमेण गायत्रीत्रिष्टुभौ सोमपुत्रो बुधऋषिरपश्यत् । युज्यमानस्य सीरस्याभिमन्त्रणे विनियुक्ते । युनक्त सीरेत्यत्र द्वितीयचतुर्थयोर्व्यूहः ॥

शुनं चतस्रः सीतादेवत्याः कुमारहारितो द्वे त्रिष्टुभौ तृतीयापङ्क्तिश्चतुर्थ्यनुष्टुप् ॥

शुनं सुफाला, घृतेन सीता, लाङ्गलं, कामं कामदुघे । एताश्चतस्रः सीतादेवत्याः कुमारहारितऋषिरपश्यत् । तासु चतसृषु शुनं सुफाला, घृतेन सीता एते द्वे त्रिष्टुप्छन्दस्के । तृतीया लाङ्गलमित्येषा पङ्क्तिच्छन्दस्का । चतुर्थी कामं कामदुघे इत्येषा अनुष्टुप्छन्दस्का । सर्वासां कर्षणे विनियोगः, घृतेन सीतेति द्वादशाक्षरः । तेनैकाधिका । लाङ्गलम् सप्तकः । तेनैकोना प्रथमो व्यूहः । इन्द्राग्निभ्यां व्यूहः । प्रजाभ्यः सप्तकस्तेनैकोना ॥

विमुच्यध्वमानडुही गायत्री ॥

विमुच्यध्वमित्येषा अनडुद्देवता गायत्री । अनडुद्विमोके विनियुक्ता एकाधिका आर्षीगायत्री । पादानामनियताक्षरत्वेऽपि चतुर्विंशत्यक्षरत्वात् ॥

सजूर्लिङ्गोक्तदेवतम् ॥

सजूरब्द इत्येतद्यजुर्लिङ्गोक्तदेवतम् । कुम्भस्थे चतुर्गृहीताहोमे वि-

नियुक्तं । प्राच्चीमनुष्टुप् । चन्द्रः उषा अश्विनौ सूर्यो वैश्वानरश्चेति लिङ्गोक्ता देवता ॥ १० ॥

याओषधीः सप्तविंशतिमनुष्टुभओषधिस्तुतिमाथर्वणो भिषक् ॥

या ओषधीः पूर्वाजाताइत्याद्या, योऽश्मश्रां अभिद्रासतीत्यन्ताः सप्तविंशतिसंख्या अनुष्टुप्छन्दस्का ओषधिस्तुतिमोषधिदेवत्या अथर्वणः पुत्रो भिषक्सञ्ज्ञकऋषिरपश्यत् । अनुष्टुभइतिद्वितीयाबहुवचनम् । तद्विशेषणम् तु सप्तविंशतिमिति द्वितीयैकवचनं "विंशत्याद्याः सदैकत्वइतिवचनात्" । वीरुधः पारयिष्णवः, उच्छुष्मा, अश्वं समिथ्यन्तीनां । अतिविश्वाः स्तेनइवेति, नवकं ओषधीः प्रातुध्वदुद्यत्किञ्च, साकं यक्ष्म, साकं वातस्य । बृहस्पतिप्रसूता मुञ्चन्तु, एते नवमाक्षराः एतेषु व्यूहः । असंभवे एकोनं छन्दः । आद्याः पञ्चदश सर्वौषधवपने विनियुक्ताः । अवशिष्टानां द्वादशानां मुञ्चन्तु मा शपथ्यादित्यादीनां क्वापि विनियोगो नास्तीत्याह ॥

मुञ्चन्त्वधुर्द्वादशानारभ्याधीताः ॥

मुञ्चन्तु मा शपथ्यादित्याद्या द्वादशर्चोऽनारभ्याधीताः बन्धुऋषिरपश्यत् । कस्मिन् कर्मणि विशेषमारभ्याधीता, अनारभ्याधीताः । नआरभ्याधीता अनारभ्याधीता. आसां क्वापि विनियोगो नास्तीत्यर्थः, मुञ्चन्तु मा । अथो वरुण्यात् । बृहस्पतीति सप्तकः । अश्वेन द्वे । मा वः । सर्वमस्तु । उपधयदितिनवकः । सोमेनेति सप्तकः । भर्गसइति नवकः, त्वां गन्धर्वा । सहस्व । सहस्रपाप्मा, दीर्घायुस्ते, दशकः तेन त्र्यधिका । त्वमुत्तमा । अत्र एतेषु पादेषु यथासंभवं व्यूहः । तदसंभवे छन्दसो न्यूनता ॥

मा मा हिरण्यगर्भ कार्यो त्रिष्टुभम् ॥

मा मा हिंसीदित्येतामृचं कार्षीं कायदेवत्यां त्रिष्टुभम् हिरण्यगर्भऋषिरपश्यत् । द्वितीये व्यूहः पुरस्ताल्लोगेष्टकोपधाने विनियोगोऽस्याः ॥

अभ्यावर्त्तस्वोष्णिगाग्नेयी ॥

अभ्यावर्त्तस्वेतीयमृक् उष्णिक् अग्निदेवत्या । अन्वयमेकादशकस्तेनैकोना । दक्षिणतो लोगेष्टकोपधाने विनियुक्ता ॥

अग्ने यद्गायत्री ॥

आग्नेयीत्यनुवर्त्तते । अग्ने यत्ते शुक्रमितीयमृक् अग्निदेवत्या गायत्रीछन्दस्का पश्चाल्लोगेष्टकोपधाने विनियुक्ता । अत्र प्रथमो नवकः तेनैकाधिका ॥

इषं त्रिष्टुप् ॥

इषमूर्जमित्यस्यास्त्रिष्टुप्छन्द आशीर्देवता । पादत्रयस्योत्तरतो लोगेष्टकोपधाने विनियोगः चतुर्थस्य सिकतापातने । अत्र प्रथमतृतीययोर्व्यूहः ॥

अग्ने तव पावकोऽग्निराग्नेयषडृचम् ॥

अग्ने तवेति षडृचम् अग्निदेवतम् पावकोऽग्निऋषिरपश्यत् सिकतावापे विनियोगोऽस्य षडृचस्य ॥

प्रथमे विष्टारपङ्क्तिः ॥

यस्या द्वितीयतृतीयौ पादौ द्वादशकौ आद्यतुरीयावष्टकौ । सा विष्टारपङ्क्तिः । "मध्यमौ चेद्विष्टारपङ्क्ति" रितिवचनात् । बृहद्भानो । अस्य व्यूहेन पूरणम् । पावकवर्चा इत्ययं नवकस्तेनैकाधिका ॥

तिस्रः सतोबृहत्यः ॥

ऊर्जो नपात् । इरज्यन्नग्ने, इष्कर्त्तारं इत्येतास्तिस्रऋचः सतोबृहत्यः । यस्याः प्रथमतृतीयौ द्वादशकौ इतरावष्टकौ सा सतोबृहती-

"मयुजो जागतो सतोबृहतीत्युक्तेः" त्वेऽहमदत्यत्र व्यूहः। अश्री राये। इत्यत्र च॥

उपरिष्टाज्ज्योतिःषष्ठी॥

अस्मिन्नेव मङ्क्षुचेषष्ठी ऋतावानमित्येषा ऋगुपरिष्टाज्ज्योतिश्छन्दस्का। यस्या ऋचस्त्रयः पादा द्वादशाक्षरायतुर्थोऽष्टाक्षरः। सोपरिष्टाज्ज्योति" यस्मोऽष्टकस्ततो ज्योतिरित्युक्तेः" अत्र गुमृकर्थं देव्यं मानुषदत्यत्रयोर्व्यूहेनपूरणम्॥

आप्यायस्व गोतमः सौमीर्गायत्रीत्रिष्टुबुष्णिहः॥

आप्यायस्व समेतु। सन्ते पयांसि। आप्यायस्व मदिन्तमेत्येतास्तिस्त्रऋचः सौमीः सोमदेवताः। क्रमेण गायत्रीत्रिष्टुबुष्णिक्छन्दस्का गोतमऋषिरपश्यत्। आद्ययोराप्यायस्व, सन्ते पयांसीत्येतयोः सिक्तानामाप्यायने विनियोगः, तृतीयस्या विनियोगश्चात्रो नास्ति। विश्वतः सोमेत्यत्र व्यूहः। संवृण्वानौत्यत्र द्वौ व्यूहौ। दिवीत्यत्र च॥

यातेऽ वत्सारः॥

याते यज्ञो मनदत्येतामवत्सारऋषिरपश्यत्॥

तुभ्यंता द्वे विरूपः॥

तुभ्यंता, अग्नि प्रियेष्वितीमे द्वे ऋचौ विरूपऋषिरपश्यत्। तिस्रो गायत्र्य आग्नेय्यः, याते वत्सस्तुभ्यंता, अग्नि, प्रियेष्वितीमास्तिस्त्रऋचोऽग्नि देवता गायत्रीछन्दस्का। तिसृणामपि चयने अग्निभ्यः प्रक्रियमाणेभ्योऽनुब्रूहीतिप्रेषितस्य होतुरनुवचने विनियोगः। परमाचित्। अयं सप्तकः। तनैकोना॥ ११॥

मयि ककुबाग्नेयी॥

मयि गृह्णामीत्ययमृक्ककुप्छन्दस्का अग्निर्देवता। यस्यास्त्रिपदा मध्यमो द्वादशकः। प्रथमतृतीयावष्टकौ। सा ककुबित्युच्यते।

"मध्यमचेत्ककुबिति" वचनात् । अत्र तु मध्यमचतुर्दशकत्वेन द्व्यधिका यजमानजपेऽस्या विनियोगः ॥

## ब्रह्मादित्यदेवता त्रिष्टुप् ॥

ब्रह्मयज्ञानमित्येषा त्रिष्टुप्छन्दस्का । आदित्यदेवता च । तृतीये व्यूहः । एकोनता वा । रुक्मोपधाने विनियोगः ॥

## हिरण्यगर्भो हिरण्यगर्भः कायं त्रिष्टुभम् ॥

हिरण्यगर्भः समवर्ततेतीमामृचं कायदेवतां त्रिष्टुभं हिरण्यगर्भः ऋषिरपश्यत् । हिरण्मयपुरुषोपधानेऽस्या विनियोगः । चतुर्थे व्यूहः ॥

## नमोऽस्तु सार्पं तृचमानुष्टुभम् ॥

नमोऽस्तु सर्पेभ्य इतीदं तृचं सर्पदेवतमनुष्टुप्छन्दस्कं । यजमानस्योपस्थाने विनियुक्तं । नमोऽस्त्वित्यत्र षडक्षरः व्यूहेन सप्ताक्षरः । तेनैकोना । सर्पेभ्य इत्यत्र पुनर्यकारव्यूहो वा, याऽइषव इति नवकस्तेनैकाधिका ॥

## कृणुष्व पञ्च प्रतिसरा राक्षोघ्ना देवानामार्षम् ॥

कृणुष्व पाज इत्याद्याः पञ्चर्चः प्रतिसराः राक्षोघ्नाः राक्षसान् प्रत्यक्षरूपेण सरन्तीति प्रतिसराः अतएव रक्षोहननसम्बन्धात् राक्षोघ्ना इत्यासां संज्ञाः । देवानामार्षं । देवा आसामृषय इत्यर्थः । "एतद्वै देवा अबिभयुरिति देवाः प्रकल्प्य त एता राक्षोघ्नान् प्रतिसरानपश्यन् कृणुष्व पाज इत्यादिश्रवणात्" ॥

## सर्वास्त्रिष्टुभ आग्नेयो वामदेवश्चापश्यत् ॥

कृणुष्व पाज इत्याद्याः सर्वाः पञ्चापि त्रिष्टुप्छन्दस्का अग्निदेवताः वामदेवश्च ऋषिरपश्यत् । चकारः पूर्वोक्तैर्देवैर्ऋषिभिः संमुच्चया[illegible] पुरुषे पञ्चगृहीतहोमे सर्वासां विनियोगः । या॰ह राजेव । तृष्वीं मन्थोर्व्यूहः । तपूंष्यग्ने द्वौ व्यूहौ उदग्ने धामिवान् । अनयो

र्ध्वः । नीचा सं । उदर्ध्वौ भवेत्यत्र च । आविरित्यत्र द्वौ ॥

### अग्नेष्ट्वा यजुराग्नेयम् ॥

अग्नेष्ट्वा इत्येतदग्निदेवतम् यजुः पङ्क्तिः काष्मर्यमयस्रुगुपधाने विनियोगः । अग्निर्मूर्द्धेत्यस्याः प्रागुक्तं सर्वम् ॥

### इन्द्रस्यैन्द्रम् ॥

इन्द्रस्य त्वौजसेति यजुरिन्द्रदेवतम् । यजुः पङ्क्तिः । औदुम्बरस्रुगुपधाने विनियोगः ॥

### भुवस्त्रिशिरा आग्नेयी त्रिष्टुभम् ॥

भुवो यज्ञस्येतीमामृचं अग्निर्देवता त्रिष्टुभम् त्रिशिराऋषिरपश्यत् । औदुम्बर्या स्रुच उपधानएवास्या अपि विनियोगः ॥ १२ ॥

### ध्रुवास्यूर्ध्वबृहती ॥

ध्रुवाऽसि धरुणेतीयमृक् ऊर्ध्वबृहती, यस्यास्त्रयः पादा द्वादशकाः । सोर्ध्वबृहती । "त्रिजागतोर्ध्वबृहतीत्युक्तेः" । अत्र प्रथमस्त्रयोदशकः द्वितीयो द्वादशकः । तृतीयो दशकइति । व्यूहेन छन्दः पूर्त्तिः ॥

### प्रजापतिरनुष्टुप् ॥

प्रजापतिष्ट्वेतीयमनुष्टुप् । आद्यौ नवकौ । चतुर्थः सप्तकः ॥

### भूरसि प्रस्तारपङ्क्तिः ॥

भूरसीत्यस्याः प्रस्तारपङ्क्तिश्छन्दः । यस्या आद्यौ द्वादशकौ । अन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः । "आद्यौ चेत्प्रस्तारपङ्क्तिरित्युक्तेः" अत्र आद्यएकादशकः द्वितीयस्त्रयोदशकः तृतीयचतुर्थौ अष्टाष्टाक्षरइति एवं चत्वारिंशदर्णैषा ॥

### आसाᳪ स्वयमातृण्णादेवता विश्वस्माᳪएतस्य च यजुषः ॥

आसां ध्रुवासीत्यादितसृणामृचां विश्वस्मै प्राणायेत्येतस्य यजुषश्च स्वयमातृण्णादेवता । स्वयमातृण्णोपधाने सर्वासां विनियोगः । त्रि-

अथ एकाधिकारमे आर्षी अनुष्टुप् ॥

काण्डात्काण्डादानुष्टुभं द्व्यृचमग्निना दृष्टम् दूर्वेष्टकदैवतम् ॥

काण्डात्काण्डात्, या शतेनेत्येतद्व्यृचमृग्द्वयं दूर्वेष्टकदैवतमग्निना, दृष्टं अग्निरस्यऋषिरित्यर्थः । तस्यास्ते द्व्यृचं व्यूहः । दूर्वेष्टकोपधाने विनियोगः ॥

यास्तेऽग्नऽग्नेयं द्व्यृचमानुष्टुभमिन्द्राग्निभ्यां दृष्टम् ॥

यास्ते अग्ने, या वो देवाइत्येतद्व्यृचं ऋग्द्वयं अनुष्टुप्छन्दस्कमिन्द्राग्निभ्यां दृष्टं । इन्द्राग्नी अस्य ऋषिरित्यर्थः । अत्र दिवमातन्वन्तीति नवकः । तेनैकाधिका । गोष्वश्वेष्विति व्यूहः । हिरण्मयउपधाने विनियोगः ॥

विराडयं लोकः ॥

विराड्ज्योतिरित्यस्यायं लोकोदेवता । यजुरनुष्टुप् । रेतः सिगुपधाने विनियोगः ॥

स्वराडसौ लोकः ॥

स्वराड्ज्योतिरित्यस्यासौ लोकोदेवता । यजुरनुष्टुप् । रेतः सिगुपधाने विनियोगः ॥

प्रजापतिष्ट्वा वैश्वज्योतिषम् ॥

प्रजापतिष्ट्वेत्येतद्यजुर्वैश्वज्योतिषम् । विश्वज्योतिरस्य देवतेत्यर्थः । व्यूहः शक्वरीछन्दः । विश्वज्योतिषउपधाने विनियोगः ॥

मधुश्चर्तुदैवतम् ॥

मधुश्चर्तुदैवतं । मधुश्च माधवश्चेत्येतद्यजुर्ऋतुदैवतं अत्र षट्दोपारगतमक्षराणि सन्ति तेनानियताक्षरत्वाच्छन्दसोऽभावः । ऋतव्योपधानेऽस्य विनियोगः ॥

अषाढाऽसि सविताऽपश्यत् । देवा वाऽअपश्यन्निष्टका-दैवतम् ॥(१)

अषाढासि इतीमामृचं इष्टकादैवत विराडनुष्टुप्छन्दस्कां सविताख्यऋषिरपश्यत् ॥

अत्राद्यौ एकादशाक्षरौ तृतीयोऽपि व्यूहेनैकादशकः । तेनेयं विराडनुष्टुप् । "दशकास्त्रयो विराडेकादशका वेति" वचनात् । अषाढोपधाने अस्या विनियोगः ॥ १३ ॥

मधु वाता वैश्वदेवं तृचं गायत्रं गौतमः ॥

मधु वाता इत्येतत्तृच विश्वदेवत्यं गायत्रीछन्दस्कं गौतमऋषिरपश्यत् । दधिमधुघृते. कूर्माञ्जनेऽस्य विनियोगः । अत्र माध्वीनं इत्यत्र व्यूह । मधुमान्नस्तु समत । तेनैकोना ॥

अपां गम्भन्पङ्क्तिः ॥

अपां गम्भन्नित्यस्याः पङ्क्तिः छन्दः अत्र तृतीयो द्वादशकः अन्यौ दशकौ । तेन दृश्यधिका स्वराट्पङ्क्तिरियं कूर्मोपधाने विनियोगः ॥

यौनिसमुद्रात्त्रिष्टुप् ॥

यौनिसमुद्रानित्यस्यास्त्रिष्टुप्छन्दः । अत्र प्रथमो दशकः तृतीयो द्वादशक अन्यौ एकादशकौ ॥

कौर्म्यं द्व्यृचम् ॥

अपां गम्भन् यौनिसमुद्रानित्येतत् द्व्यृचं कौर्म्यं कूर्मदैवतम् कूर्मस्य "प्रजापतिरादित्यो वेति संहिताभाष्ये" यौनिसमुद्रानित्यस्य कूर्माञ्जने विनियोग । तृतीयाऽत्र मह्री यौरिति कूर्मोपधाने विनियुक्ता । तथा चत्यादि प्रागुक्तम् ॥

भ्रुवाऽसि त्रिष्टुप् ॥

(१) अषाढासि "इ" सविताऽपश्यद्देवा वाऽअपश्यन्निष्टकादैवते विराडनुष्टुबिति. काण्वशाखीय सर्वानुक्रमपाठो बोध्य ॥

ध्रुवाऽसि धरुणेतइत्यस्यास्त्रिष्टुप्छन्दः उखोपधानेऽस्या विनियोगः । प्रथमो द्वादशकस्तेनैकाधिका ॥

इषे बृहती ॥

इषे रायइत्यस्या बृहतीछन्दः उखोपधानएव विनियोगः । यत्रा यो दशकः । अन्त्योऽपि व्यूहेन दशकः द्वावष्टकौ । तेनैयमार्षीबृहती पादाक्षरनियमाभावेऽपि ॥

औखं द्व्यृचम् ॥

ध्रुवाऽसि, इषे रायइत्येतद्व्यृचमौखं उखादेवताम् ॥

अग्ने युक्ष्वाग्नेयन् द्व्यृचङ्गायत्रम् ॥

अग्ने युक्ष्वाहीत्येतद्द्व्यृचमग्निदेवतम् गायत्रीछन्दस्कं । उखायां स्रुवाहुतिहोमे उपस्थाने वा विनियुक्तम् ॥

आद्यायां भरद्वाजः ॥

आद्यायाः अग्ने युक्ष्वाहीत्यस्याः भरद्वाजऋषिः ॥

द्वितीयस्या विरूपः ॥

द्वितीयस्याः युक्ष्वाहीत्यस्याः विरूपऋषिः । अत्र तृतीये व्यूह. ॥

सम्यक्त्रिष्टुब्लिङ्गोक्तदेवता ॥

सम्यक्स्रवन्तीतीयमृक्त्रिष्टुप्छन्दस्का लिङ्गोक्तदेवतामुखे हिरण्यशकलप्रासने विनियुक्ता ॥

ऋचे त्वा बृहती ॥

ऋचे त्वा रुचे त्वेतीयं लिङ्गोक्तदेवता हिरण्यशकलदेवतेत्यर्थः । बृहतीछन्दस्का । व्यूहेनैयमार्षीबृहती । पादानामक्षरनियमाभावात् । स्वप्रस्थानेषु हिरण्यशकलप्रासने विनियुक्ता । ऋचे त्वेत्यस्य दक्षिणनासिकायाम् । रुचे त्वेति सव्यायां । भासे त्वा दक्षिणचक्षुषि प्रभृतिदं । दक्षिणयोर्वे ॥

## अग्निर्ज्योतिषोष्णिक् ॥

लिङ्गोक्तदेवतेत्यनुवर्तते । अग्निर्ज्योतिरितीयमृगुष्णिक्छन्दस्का । आद्यपादेऽस्योत्तरस्याने हिरण्मयशकलासने विनियोगः, सहस्रदाद्रत्यस्य पुरुषशिरसउद्धरणे । द्वावाद्यावष्टकौ । तृतीयस्य व्यूहेन द्वादशाक्षरपूरणम् ॥

## आदित्यं गर्भं पञ्चर्चमाग्नेयं त्रैष्टुभम् ॥

आदित्यं गर्भं पयसा । वातस्य जूतिम् । अजस्रमिन्दुम् । वरूत्रीं त्वष्टु, योऽअग्निरग्नेरित्येतत्पञ्चर्चं अग्निदेवत त्रिष्टुप्छन्दस्कं । आदित्यं गर्भमित्यस्याः पुरुषशिरसउपधाने विनियोगः, वातस्य जूतिमित्यस्याश्वशिरसउपधाने । अजस्रमिन्दुमित्यस्या गोः शिरसउपधाने । वरूत्रीमित्यस्याः अविशिरसउपधाने । योऽअग्निरित्यस्याजशिरसउपधाने विनियोगः । अत्र पञ्चर्चे आग्ने माहिꣳसीः । अजस्रमिन्दुं अनयोर्व्यूहः । मा माहिꣳसीः इमक, योऽअग्निः व्यूहः । योऽवाद्यादशकः, विश्वेदेवानामित्यस्यास्तु अस्यादि प्रागुक्तं । (१)अर्धर्चेन सुवाकुत्सौहोमे विनियोगइतिविशेष ॥

## इमं मा पञ्चर्चमाग्नेयं त्रैष्टुभमेव द्वे द्वे चान्ते यजुषी ॥

इमं माहिꣳसीः । इमं मा हिꣳसीर्द्विपादं । इमꣳसाहस्रम् । इममूर्णायुं । अजो ह्यग्नेरित्येतत्पञ्चर्चमग्निदेवत त्रिष्टुप्छन्दस्कमेव नतु मयुक्ते युक्तस्वेत्यादीनामक्षराणि मध्ये गणयित्वाधिकछन्दोऽन्तरशंका कार्येत्येवकारार्थ । पञ्चानामप्यृचामन्ते प्रत्येकं द्वे द्वे यजुषी । मयुक्ते युक् । यदिमस्तदत्यादिके । उपधाक्रमेण पुरुषादिशिरसामुपस्थाने क्रमेण पञ्चानामृचां सयजुष्काणां विनियोग । इमं मा हिꣳसीर्द्विपादं । इमक, तेन त्रिष्टुप् व्यूह । मयुक्ते । दैवीजगती । यदिद

(१) अर्द्धर्चान्- सुवर्णाहोमे विनियोगाभावे पदार्थपाठ. ॥

पः यजुर्बृहती । गौरन्ते दैवीजगती । गवयन्ते यजुरनुष्टुप् । उष्ट्रन्ते । दैवीजगती । शरभन्ते यजुरनुष्टुप् यन्निर्दिष्टदतियजुर्बृहत्येव सर्वत्र । व्यायमान । चजो व्युनैः ब्यूहः । सोऽपरद्शकः । इममूसाहस्त्रमित्यासु तिसृषु अवसानत्रयात्पराणि त्रीणि यजूंषि । गवयमारण्य, उष्ट्रमारण्य । शरभमारण्यमित्यादीनि, गवयं, शरभ । इमौ साम्नविष्टुभौ । उष्ट्रं चतुष्पिक ॥

## त्वं यविष्ठोशना: काव्यस्याग्नेयीमनिरुक्तां गायत्रीम् ॥

त्वं यविष्ठेतीमामृन अग्निदेवतामनिरुक्तां मध्येऽग्निपदनिरुक्तिरहितां गायत्रीं कूर्मपत्यमुशना काव्यर्षिरपश्यत्, प्रथमे व्यूह, चित्योपस्थानेऽस्या विनियोग ॥

## अपां त्वा विंशतिरिष्टकानि ॥

अपां त्वेमन्नित्यादीनि पाङ्क्तेनत्वा छन्दसेत्यन्तानि विंशतियजूंषि इष्टकादेवतानि । अपस्यानामुपधाने विनियुक्तानि । अपात्वेमन् । १। अपात्वोद्मन् । २। यजुरनुष्टुभौ । अपां त्वा भस्मन् । यजुर्बृहती ॥३॥ ज्योतिषि । यजुः पङ्क्ति ॥४॥ अयनौ । यजुर्बृहती ॥५॥ अर्णवे ॥६॥ समुद्रे ॥७॥ सरिरे ॥८॥ यजुस्त्रिष्टुभ । क्षये । यजुर्बृहती ॥९॥ सधिषि ॥१०॥ सदनौ ॥११॥ सधस्थे ॥१२॥ यजुः पङ्क्तयः । योनौ ॥१३॥ यजुर्बृहती । पुरीषे ॥१४॥ पाथसि ॥१५॥ यजु पङ्क्ती । गायत्रेण ॥१६॥ त्रैष्टुभेन ॥१७॥ जागतेन ॥१८॥ यजुर्जगत्य । आनुष्टुभेन ॥१९॥ आसुर्यनुष्टुप् । पाङ्क्तेन त्वा ॥२०॥ यजुस्त्रिष्टुप् ॥

## अयं पुर: पञ्चाशत्प्राणभृद्दैवत्यानि ॥

अयपुरोभुवइत्यादीनि वाचं त्वहामि प्रजाभ्यइत्यन्तानि पञ्चाशद्यजूंषि प्राणभृतामुपधाने विनियुक्तानि । एषां छन्दांस्युच्यते । अ-

अयंपुरः । यजुर्गायत्री ॥ १ ॥ तस्य प्राणः । यजुरनुष्टुप् ॥ २ ॥ वस-
न्तः यजुरुष्णिक् ॥ ३ ॥ गायत्री । वासन्ती ॥ ४ ॥ गायत्र्यै ॥ ५ ॥
गायत्रात् ॥ ६ ॥ देव्यस्त्रिष्टुभः, उपांशुर्दैवीपङ्क्तिः ॥ ७ ॥ त्रि-
वृत. । दैवीजगती ॥ ८ ॥ वसिष्ठः दैवीपङ्क्तिः ॥ ९ ॥ प्रजापतिर्ब्र-
ह्मगायत्री ॥ १० ॥ अयं दक्षिणा । यजुर्बृहती । १ ॥ तस्य मनो । य-
जुर्बृहती ॥ २ । ग्रीष्मो दैवीपङ्क्तिः, । ३ । त्रिष्टुप् । दैवीबृहती ॥ ४ ॥
त्रिष्टुभः, दैवीपङ्क्तिः ॥ ५ ॥ स्वारात् यजुर्गायत्री ॥ ६ ॥ अन्तर्यामात्
यजुरनुष्टुप् ॥ ७ ॥ पञ्चदशात् यजुर्गायत्री ॥ ८ ॥ भरद्वाजो यजु-
र्गायत्री ॥ ९ ॥ प्रजा॰ ब्रह्मगायत्री ॥ १० ॥ अयं पश्चात् ।
यजुर्बृहती ॥ १ ॥ तस्य चक्षु । यजुर्बृहती । २ । वर्षाः दैवी-
पङ्क्तिः ३ जगती दैवीपङ्क्तिः ४ जगत्याऽऋक्समं । यजुर्गा-
यत्री । ५ । ऋक्समात् दैवीपङ्क्ति । ६ । शुक्रात् । दैवीत्रिष्टुप् । ७ ।
सप्तदशात् । दैवीजगती । ८ । जमदग्नि, यजुर्गायत्री । ९ । प्रजाप-
तिः । ब्रह्मगायत्री । १० । इदमुत्तरात्स्व । यजुर्गायत्री । १ । तस्य
श्रोत्रं यजुर्गायत्री । २ । शरच्छ्रौत्री । यजुर्बृहती । ३ । अनुष्टुप् ।
यजुर्गायत्री । ४ अनुष्टुभ ऐडम् । यजुर्गायत्री । ५ । ऐडात् । दैवीबृह-
ती । ६ । मन्थिनो दैवीजगती । ७ । एकविंश॰ शात् । दैवीजगती । ८ ।
विश्वा । दैवीत्रिष्टुप । ९ । प्रजापतिः, ब्रह्मगायत्री ॥ १० ॥ इयमुपरि ।
दैवीजगती । १ । तस्यै । दैवीपङ्क्ति । २ । हेमन्तो । दैवीपङ्क्ति ।
३ । पङ्क्तिर्हैमन्तीर्दैवी पङ्क्ति । ४ । पङ्क्त्यै । यजुर्गायत्री । ५ ।
निधनवत । यजुर्बृहती । ६ आग्रयणात् । यजुस्त्रिष्टुप् । ७ । त्रिणव
त् । सामीष्णिक् । ८ । विश्वकर्मऋषि । यजुर्गायत्री । ९ । प्रजाप-
तिर्ब्रह्मगायत्री । १० ।

लोकं ताऽइन्द्रं तिस्रः प्रतीकोक्ताः ॥(१)

---

(१) लोकंपृण ताऽअस्येन्द्रंविश्वाअवीवृधन्स. प्रतीकोक्ता इति काण्वपाठ. ॥

लोकं पृण च्छिद्रं पृण । ताऽअस्य सूददोहसः, इन्द्रं विश्वा इत्ये तास्तिस्रऋचो ऽत्र प्रतीकोक्ताः । प्रतीकेनाऽऽदिमात्रेणोक्ताः सर्व्वाः सकलाः प्रयोगकाले ज्ञेयाः, लोकं पृणेत्यस्याः । लोकंपृणाभिमन्त्रणे विनियोग । ताऽअस्येत्यस्याः सूददोहसाभिवदने । इन्द्रं विश्वाइत्यस्याः पुरीषनिवपने ॥ (१)

एवठं० सर्वत्र ॥

यत्र लोकं ता इन्द्रमित्येवं संहितायां पठ्यते । अनड्वान्वयइत्यस्यां कण्डिकायां । यग्नीरादित्यस्यां । नवविठं०मस्या स्तुवतेत्यस्याध्यायान्ते तत्र सर्वत्र । एतास्तिस्रऋचः प्रतीकोक्ताः सकला ज्ञेयाः ॥ २४ ॥

इति प्रथमा चितिः समाप्ता । अथ द्वितीया चितिः ॥

अभिधीयतइतिशेषः द्वितीया देवानामित्यस्य विषयोप प्रदर्शनार्थमिदमुक्तम् ॥

ध्रुवक्षितिः पञ्चाश्विन्यः ॥

ध्रुवक्षितिर्ध्रुवयोनिः । कुलायिनी । स्वैर्दक्षैः । पृथिव्याः पुरीषं । अदित्यास्त्वापृष्ठेइत्येताः पञ्चऋचआश्विन्यः अश्विदेवत्याः आश्विनीनामुपधाने क्रमेणविनियुक्ताः । आसां छन्द आह ॥

तासां प्रथमा विराट्चतस्रस्त्रिष्टुभो यजुरन्ताः ॥

तासां पञ्चानां प्रथमा ध्रुवक्षितिरित्येषा विराडनुष्टुप् । "दशकाक्षयो विराडेकादशकावित्युक्ते" । कुलायिनीत्याद्याश्चतस्रस्त्रिष्टुभः । अन्त्यापि यजुरन्ताः । पञ्चस्वप्यश्विनाध्वर्यूइत्येतद्यजुरन्ते अस्तीत्यर्थः । अस्य यजुषः । सामगायत्रीछन्दः ध्रुवक्षितिः आद्यतृतीयावैकादशकौ । द्वितीयो दशकः । स्योने सीद स्वैर्दक्षैः । स्वावेशा ।

(१) निवापे विनियोग इतिपद्धतिपाठः ॥

**अग्ने त्वा ॥**

अग्ने त्वा अग्नेर्भागोऽसीत्यादीनि दशयजूंषि । अग्नेर्भाग । प्राजापत्याबृहती । १ । इन्द्रस्य । साम्नित्रिष्टुप् । २ । नृचक्षसां । साम्नीजगती । ३ । मित्रस्य । ऋग्बृहती । ४ । अग्नेरित्यादीनां चतुर्णां मृत्यमीष्टिक्युपधाने विनियोगः । वसूनां भाग । ५ । आदित्यानां । साम्नीजगत्यौ । ६ । अदित्यै प्राजापत्यावृहती । ७ । देवस्य सवितुः पङ्क्तिः । ८ । यवानां । व्यूहो । ऋग्बृहती । ९ । ऋभूणां व्यूहः । ऋग्बृहती । वसूनामित्यादिपण्णां षट्पद्योपधाने विनियोगः ॥

**एकया सप्तदश ॥**

एयाऽस्तुवतेत्यादीनि सप्तदशयजूंषि सप्तदशसृष्टीनामुपधाने विनियुक्तानि ॥

**सर्वाणि लिङ्गोक्तदेवतानि ॥**

सर्वाणीति आयुरित्यादीन्यष्टादश, अग्नेरित्यादीनि दश, एकयेत्यादीनि सप्तदशैतानि, । लिङ्गोक्तदेवतानि । आयुरित्यादीनां विश्वस्तोमाद्यो देवता । अग्नेरित्यादीनां च यथा सर्वासामुपधीयमाना इष्टका एव देवता ॥

**सहस्रवल्यम् ॥**

सहस्र सहस्रस्येत्येतद्वल्यं । वसुदेवतं यत्प्राशीरर्भक्षणाद्दरपि । एतावत्परिमाणस्य छन्दसोऽभावाद्दत्र छन्दो नास्ति । तदुक्तं । यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यत इति ॥ एकयाऽस्तुवतेत्यादीनां छन्दांस्युच्यन्ते । एकया । साम्नित्रिष्टुप् । १ । तिसृभिः । व्यूहेन साम्नीजगती २ । पञ्चभिः । साम्नीजगती ३ । सप्तभिः । साम्नित्रिष्टुप् । ४ नवभिः । प्राजापत्याबृहती ५ । एकादशभिः । साम्नीजगती ६ । त्रयोदशभिः साम्नीजगती ७ पञ्चदशभिरनुष्टुप् । ८ सप्तदशभिः ऋग्बृह

सखाय. सम् ॥(१)

अथ सखाय सम् । इय एस्तोमं,अनयोर्व्यूहः । वर्षिष्ठाय । समक्षः, अग्ने विश्वानि । सनो वसूनि अनयोर्व्यूहः ॥

पञ्चमः प्रगाथ एना वः ॥

अस्मिन्ननुवाके एना वइत्ययं पञ्चमस्तृचः प्रगाथसञ्ज्ञः । द्वयोर्ऋचो । प्रागाथपद्यप्रथमेन ऋक्तृचयसम्पादनं प्रगाथइत्युच्यते । तत्प्रकारमाह ॥

तत्र पूर्वा बृहती सतोबृहत्युत्तरा ताभ्यां तिस्रो बृहत्यः सम्पादिता. ॥

तत्र एना व इत्यत्र ऋचे पूर्वा एनावइति । उत्तरा सयोजतइती यसतोबृहती । यस्यास्तृतीय पादो द्वादशाक्षर· सा बृहती "तृतीयो द्वादशकइत्युक्ता" । यस्याश्च प्रथमतृतीयौ पादौ द्वादशाक्षरौ । द्वितीयचतुर्थावष्टाक्षरौ । सतोबृहती । "अयुजौ जागतौ सतोबृहत्युक्ते" ताभ्या बृहती सतोबृहती । ताभ्यां तिस्रो बृहत्यः बृहतीछन्दस्का ऋच सहिता पाठएव सपादिताः कृताः । तत्रायं प्रकार । एना वो अग्निं नमसोर्जो न पातमाहुवे । प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतमितीयं बृहती,सयोजते अरुषा विश्वभोजसा सदुद्रवत्स्वाहुत । सुब्रह्मा यज्ञ सुशमी वसूनां देवं राधो जनानामिति सतोबृहती, तत्र एनावइतीयमेका सतोबृहती । विश्वस्य दूतममृतमिति सतोबृहती,यथासङ्ख्यं अष्टाक्षरं पाद द्वि. पठित्वा, सयोजते अरुषेति तृतीयो द्वादशाक्षर सदुद्रवदित्यष्टाक्षरश्चतुर्थ. पठितः । एव द्वितीयाबृहती संपादिता । ततः पुनः सदुद्रवदितीममष्टाक्षर पाद द्वि पठित्वा सुब्रह्मा यज्ञइतितृतीयो द्वादशाक्षरो देवं-

(१) एवा त्रिष्वपरतम वैकल्पिकीम् । इत्यधिक..कापाठ ॥

राधइत्ययमष्टाक्षरश्चतुर्थः पठितः एवमृचोः परस्परं प्रग्रथनात्प्रगाथइत्युच्यते । अस्य त्वचस्य बृहतीनामुपधाने विनियोगः । अत्र मियं चेतिष्ठेत्यत्र व्यूहः । सदुद्रवदित्यत्र च । सुमख्या अयमेकादशकः । देवं राधइत्ययमष्टकः । तेन द्व्यूना ॥

## षष्ठीर्व्यौष्टोऽग्ने वाजस्य ॥

अस्मिन्नेवानुवाके अग्नेवाजस्य सद्दधान, अग्नीराजनित्ययं षष्ठस्त्र्यृषीव्यौष्टः । उष्णिक्छन्दस्कः । उष्णिहामुपधाने विनियुक्तः अग्निरीडेऽयः सप्तकः । अत्र व्यूहः न्यूनता वा ॥

## सप्तमः पुनः काकुभः प्रगाथो भद्रो नः ॥

अस्मिन्ननुवाके भद्रो नो अग्निरित्ययं सप्तमस्तृचः पुनः काकुभः प्रगाथः ककुप्छन्दस्कः प्रगाथइत्यर्थः ककुभामुपधाने विनियुक्तः । नवमे प्रगाथमाह ॥

## तत्र पूर्वा ककुप् सतोबृहत्युत्तरा ताभ्यां तिस्रः ककुभः सम्पादिताः ॥

तत्र भद्रो न इत्यस्मिन्सप्तमे तृचे पूर्वा भद्रो न इत्येषा ककुप्छन्दस्का । उत्तरा भद्रं मनः कृणुष्वेत्येषा सतोबृहती यस्यास्त्रिपदाया मध्यमः पादो द्वादशाक्षरःअन्त्यावष्टकौ सा ककुप् । "मध्यमेचेत्ककुबित्युक्तेः" यस्याः प्रथमतृतीयौ द्वादशकौ अन्त्यावष्टकौ सा सतोबृहती । "अयुजौ जागतौ सतोबृहतीत्युक्तेः" । ताभ्यां ककुप्सतोबृहतीभ्यां तिस्रः ककुभः ककुप्छन्दस्का ऋचः संपादिताः । तत्रायंप्रकारः । भद्रो नो अग्निराहुतो भद्रारातिः सुभगभद्रोऽध्वरः । भद्राऽउत प्रशस्तयः । इत्येषा ककुप्, भद्रंमनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहः, अवस्थिरा तनुहि भूरि शर्धतां, वनेमातेऽभिष्टिभिरिति, सतोबृहती, तत्र भद्रोनो अग्निराहुतइतीयमेका सत

नि द्वादशाक्षराणि प्रयोगकाले अधिकानि संविदितानि सन्ति तेन त-
न्त्रेयमतिधृतिछन्दस्का ॥

अग्ने त्वं द्वैपदस्तृचः ॥

अग्निदाग्नेये अनुवाके अग्ने त्वंनो अन्तम', वसुरग्निः। तन्त्वा शो-
चिष्ठेत्ययं द्वैपदः। द्विपदाछन्दस्कः द्विपदानामुपधाने विनियुक्तः। १८।
अथाग्निर्नेवाग्निर्मूर्द्धेत्यनुवाके मन्त्रापामृषीनाह ॥

अयमग्निर्विरूपः ॥(१)

अयमग्निः सहस्रिणइत्यस्या विरूपऋषिः ॥

अबोधि बुधगविष्ठिरौ ॥

अबोध्यग्निरित्यस्या बुधगविष्ठिरावृषी ॥

जनस्य सुतम्भरः ॥

जनस्य गोपा इत्यस्याः सुतंभरऋषि. ॥

सखायऽइषः ॥

सखायः संवइत्यस्य इषऋषिः ॥

सᳬसमित्संवननः ॥

सᳬसमिदित्यस्याः संवननऋषि. ॥

त्वां प्रस्कण्वः ॥

त्वां चित्रश्रवस्तमेत्यस्याः प्रस्कण्वऋषि' ॥

एनावो वसिष्ठः ॥

एनावो अग्निमित्यस्या वसिष्ठऋषि ॥

अग्ने वाजस्य गोतमः ॥

अग्ने वाजस्येत्यस्या गोतम'। अग्निर्मूर्धा ॥

भद्रो नः सौभरिः ॥

---

(१) अयेवामृपयः। इति कात्यायनानुक्रमेऽधिकः पाठो बोध्यः ॥

भद्रो नो अग्निरित्यस्याः सौभरिऋर्षिः ॥

अग्निं तं कुमारवृष्णौ ॥

अग्निं त कुमारवृष्णौ। अग्निं तं मन्यइत्यस्या कुमारवृष्णाहरी। अनुक्तानां साधारण परमेष्ठीऋषि ॥

येनाष्टावाग्नेय्यः षड्त्रिष्टुभो द्वे अनुष्टुभौ ॥

येनऋषयइत्याद्या अष्टौऋचोऽग्निदेवताः। तासां मध्ये आद्याः षट्त्रिष्टुप्छन्दस्का। येन ऋषसि। अयं ते योनिरितीमे द्वे ऋचावनुष्टुप्छन्दस्के। पुरुष्यित्युपधाने विनियोगोऽष्टानामपि ॥

तपश्च तव्यम् ॥

तपश्च तपस्वशेत्येतदनुदेवतं ऋतव्योपधाने विनियुक्तम् द्व्यधिकाष्टकृति छन्द ॥

परमेष्ठी सौरम् ॥

परमेष्ठीत्वेतीद यजु सूर्यदेवत विश्वज्योतिषउपधाने विनियुक्तम्। ब्राह्मी। प्रकृतीछन्द ॥

मोधद्ग्नी वसिष्ठस्त्रिष्टुभमाग्नेयीम् ॥

मोधइग्नइतीमामृचं त्रिष्टुप्छन्दस्कामग्निदेवत्यां वसिष्ठऋषिरपश्यत्। चितिपर्युपधानेऽस्या विनियोग। आवयाब्यूह ॥

आयोर्द्वे स्वयमातृण्णादैवते ॥

आयोष्ट्वा। परमेष्ठीत्वेत्येते द्वे यजुषी स्वयमातृण्णादैवते। स्वयमातृण्णोपधाने विनियुक्ते। आयोरिति ब्राह्मी उष्णिक्, परमेष्ठीत्वा। आकृतिछन्द ॥

सहस्रस्य पञ्चाग्नेयानि ॥

सहस्रस्य प्रमासीत्यादीनि पञ्च यजूंष्यग्निदेवतानि हिरण्यशकलैरग्ने प्रोक्षणे विनियुक्तानि। प्रमासि। दैवीजगती। प्रतिमा

सि । प्राजापत्यागायत्री । उष्मासि । दैवीत्रिष्टुप् । साहस्रोसि । दैवीबृहती सहस्रायता । दैवीपङ्क्तिः ॥ २० ॥

रौद्राध्यायः परमेष्ठिन आर्षं देवानां वा प्रजापतेर्वा ॥

नमस्ते रुद्र मन्यवइत्ययं रुद्रदैवत्योऽध्यायः परमेष्ठिनआर्षं । अस्याध्यायस्य परमेष्ठीऋषिरित्यर्थः ॥

देवानां वा आर्षम् ॥

अथवाऽस्याध्यायस्य देवाऋषयः प्रजापतेर्वार्षं । अथवाऽस्याध्यायस्य प्रजापतिऋषिरित्यर्थः ॥

आद्योऽनुवाकः षोडशर्च एकरुद्रदैवत्यः ॥

अस्मिन्नध्याये आद्यः षोडशर्चोऽनुवाकोरुद्रदैवत्यः । एको रुद्रो देवता यस्य एकरुद्रदैवतः ॥

प्रथमा गायत्री ॥

अस्मिन्नाद्येऽनुवाके प्रथमा नमस्ते रुद्रमन्यवइत्येषा गायत्रीछन्दस्का ॥

तिस्रोऽनुष्टुभः ॥

ततो या ते रुद्र । यामिषुं । शिवेन वचसा, इत्येतास्तिस्रोऽनुष्टुप्छन्दस्काः । यामिषुमित्यस्यास्तृतीयचतुर्थौ नवकौ । तेन द्व्यधिका । यामिषुं । सप्तकः । इत्येरत्वाच व्यूहः । एकोना । शिवेन । व्यूहः ॥

तिस्रः पङ्क्तयः ॥

पञ्चम्याद्या अध्यवोचत् । असौ यस्ताम्रः । असौ यो व इत्येतास्तिस्रः पङ्क्तिच्छन्दस्काः । अत्र प्रथमो देव्यः । अहींश्चेति सप्तकः सर्वांश्चेति व्यूहः । असौ यो वेति व्यूह, अदृश्यन् सप्तकः ॥

सप्तानुष्टुभः ॥

ततोऽष्टम्याया सप्तऋचो नमोऽस्तु नीलग्रीवाय, प्रमुञ्च । विज्यं । याते । परिते धन्वनो । अवतत्य । नमस्तऽआयुधायेत्येताः अनुष्टुप्छन्दस्का ॥

हे जगत्यौ ॥

ततः षोडशेऽनुवाके पञ्चदशीषोडश्यौ मानो महान्तं । मानस्तोक-मिति द्वे ऋचौ जगत्यौ जगतीछन्दस्के । मा नः पियाद्रस्यन्यूह । मा नो वीरानित्येकादशक ॥

मा नो द्वे कुत्सः ॥

मा नो महान्तं, मानस्तोक इतीमे द्वे ऋचौ कुत्स ऋषिरपश्यत् ॥ २१ ॥

अन्त्यानुवाके सप्त रुद्रस्तुतिः ॥

अन्त्यानुवाके द्रापेऽन्धसस्पत इत्यस्मिन्नन्तिमे अनुवाके सप्तऋचपर्यन्तस्य रुद्रस्य स्तुतिः । आसां सप्तानामृचामेको रुद्रो देवतेत्यर्थः ॥

आद्योपरिष्टाद्बृहती ॥

तासां सप्तानामाद्या प्रथमा द्रापेऽन्धसस्पत इत्येषा उपरिष्टाद्बृहतीछन्दस्का अथाद्य सप्तकः द्वितीयोऽष्टकः । तृतीयो द्वादशक । चतुर्थो द्वादशक इति नैकाक्षरोऽधिका ॥

द्वितीया जगती कुत्सस्य ॥

द्वितीया इमा रुद्रायेतीयं जगतीछन्दस्का कुत्सस्य आर्षं: कुत्सोऽस्या ऋषिरित्यर्थः ॥

तृतीयाऽनुष्टुप् ॥

तृतीया याते रुद्र इत्येषाऽनुष्टुप्छन्दस्का ॥

द्वे त्रिष्टुभौ ॥

परिणो रुद्रस्य मीढुष्टमेत्येते द्वे ऋचौ त्रिष्टुभौ । मीढुष्टमेत्यस्यां तृतीयपादो दशकः । प्रथमद्वितीयचतुर्थपञ्चमा अष्टाक्षरा । एवमेकोना

BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M.A.

AND

G. THIBAUT, PH. D.

No. 49



महर्षिकात्यायनप्रणीतम् शुक्लयजुःसर्वानुक्रमसूत्रम् ।

याज्ञिकानन्तदेवविरचितभाष्यसहितम् ॥

श्रीकाशिकराजकीयप्रधानपाठशालाधीतविद्येन श्रीमिथिला

धीशता लब्धवेदप्रमाणितिषेन काशीस्थसुप्रसिद्धविद्वज्जनस

म्मानितसंस्कृतपाठशालाध्यापकेन च पाठको

पाख्यश्रीयुगलकिशोरशर्मणा निर्मितया सर्वा

नुक्रमकौस्तुभाख्यटिप्पण्या सहितम् ॥

# KÁTYÁYANA'S SARVÁNUKRAMA SÚTRAS OF THE WHITE YAJUR VEDA

WITH THE COMMENTARY OF YÁJÑIKÁNANTADEVA

EDITED AND ANNOTATED BY PANDIT YUGALAKISORA PATHAKA

Late Scholar of the Benares Sanskrit College.

Fasciculus III.

BENARES.

PRINTED AND PUBLISHED BY

MESSRS BRAJ B. DAS & CO

AT THE BENARES PRINTING PRESS.

1894.

यजुषां रुद्राणां तिस्रोऽशीतयो देवताः ॥

तेषामुभयतो नमस्कारा आद्ये ॥

तेषां रुद्राणां मध्ये आद्ये केचिद्रुद्रा उभयतो नमस्काराः । नमो हिर-ण्यबाहवे सेनान्ये दिशां च पतये नम इत्यादि, नमः श्वभ्यः श्वपतिभ्यश्च वो नम इत्यन्ताः ॥

अन्यतरतो नमस्कारा अपरे ॥

अपरे केचन रुद्रा अन्यतरतो नमस्काराः अन्यतरतः आद्यायेव नमस्कारो येषां तेऽन्यतरतो नमस्काराः । नमो भवाय चेत्यादयो नम आक्खिदते च प्रक्खिदते चेत्यन्ताः । नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नम इत्येतेऽप्युभयतो नमस्काराः ॥

जातानामरुद्राः सभाभ्य इत्यादयः ॥

नमः सभाभ्य इत्यादयो जातानामरुद्राः जातसंज्ञका रुद्रा इत्य-र्थं । अनुवाकस्य "सभाजातिभ्यो जुहोति" इत्येव संव्यवहारार्थं । तदेवम-च तिस्रोऽशीतयो रुद्राः पूर्णाः, अथ नमो वः किरिकेभ्य इत्यादीनां च-तुर्णां यजुषां । हृदयभूता अग्निवायुसूर्याः किरिकादिशब्दवाच्या दे-वता आह ॥

नमो वः किरिकेभ्य इत्यग्निवायुसूर्यं हृदयभूताः मञ्च-व्याहृतयो पञ्चरुद्रदेवत्याः ॥ २३ ॥

किरिकेभ्यो विचिन्वत्केभ्य इत्येवमादिष्वग्न्यादिविशिष्टानामेव देवता-त्वेन श्रवणात् । अग्निवायुसूर्यं हृदयभूता इति पाठे चतसृणां व्याहृ-तीनां अग्निवायुसूर्या एव देवता हृदयभूता रुद्राणां प्रधानभूता दे-वता किरिकादिशब्दैर्यौगिकैरग्न्यादय एवाभिधीयन्त इत्यर्थः । अथ-वा व्याहृतिविशेषणत्वेन व्याख्येयं । कीदृश्यो व्याहृतयो अग्निवायु-सूर्याः हृदयभूताः प्रधानभूताः किरिकविचिन्वत्कादिभिर्यौगिकै

शब्दैर्देवतात्वेन प्रतिपाद्या यासां व्याहृतीनां ता अग्निवायुसूर्यहृदय-
भूताः । अत्र हि किरिका विचिन्वत्का विक्षिणत्का आनिर्हता अग्निवा-
युसूर्या एव । ते च रुद्राणां देवानां हृदयभूताः, कुतः नमो वः कि-
रिकेभ्य इति प्रकृत्य देवानाᳬ हृदयेभ्य इत्यग्निवायुरादित्या "एता-
नि ह्वानि देवानाᳬ हृदयानीति श्रुतेः" । हृदयानीव हृदयानि । यथा
हृदयं सर्वेषामङ्गानां प्रधानभूतं । एवमेते रुद्राणां प्रधानभूता इत्यर्थः ।
अत्र नमो वः किरिकेभ्य इत्यादीनि चत्वार्येव यजूंषि चतुर्णामेवादौ नमः
शब्दपाठात् । देवानां हृदयेभ्य इत्येतत्तु किरिकेभ्य इत्यादीनां चतुर्णां वि-
शेषणमेव । न पृथग्युक्ता इतरेषामिवादौ नमः शब्दभावात् । नमोभवाय
चेत्यादीनामिव चकारोपबन्धाभावाच्च । एवमेव हरिस्वामिमाधवाचा-
र्यैर्महताभाष्यकारा अपि स्वस्वग्रन्थेषूक्तवन्तः । अतोऽन्यादृश्यमपीदं सर्वं
जगत्कुर्वन्तीति किरिका इत्युच्यन्ते । "एते ह्वीदᳬ सर्वं कुर्वन्तीति श्रुतेः"
एतेषां प्राजापत्यमुखेभ्य उत्पत्तेः प्राजापत्यश्रवणात् । तथा विचि-
न्वन्ति धर्मकारिणमधर्मकारिणं च पृथक्कुर्वन्तीति विचिन्वत्कास्त एव ।
तथा विविधं विक्षिण्वन्ति हिंसन्तीति विक्षिणत्का । त एव । तथा आनिर्ह-
तेभ्यः हंतिर्गत्यर्थः । एते ह्यग्निवायुसूर्याः सर्वादौ एवाभिसृष्टा न एतेभ्यो
लोकेभ्यो निर्हताः निर्गताः । "तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीᳬष्यजायन्ता-
ग्निर्योऽयं पवते सूर्य इति श्रुतेः" । नमो विचिन्वत्केभ्य इत्येते ह्वीदᳬ सर्वं
विचिन्वन्तीत्यादौ सर्वमेतच्छ्रूयते । पंक्त्यादिदेवतात्वसाम्याच्चैतेषां
व्याहृतीत्वमुक्तम् । अत्र केचित्पञ्च व्याहृतय इति पठन्ति । तदयुक्तं । प-
ञ्चमस्य यजुषोऽभावात् । अस्य समस्तस्य रौद्राध्यायस्य शतरुद्रि-
यहोमे विनियोगः ॥ १६ ॥ अथ नमो हिरण्यबाहव इत्यादीनां प्रत्येकं
छन्दांस्यभिधीयन्ते ॥ १७ ॥ नमो हिरण्य० यजुस्त्रिष्टुप् । दिशां च । य-
जुरनुष्टुप् । वृक्षेभ्यः । यजुः पङ्क्तिः । शष्पिञ्जराय । हरिकेशाय य-
जुस्त्रिष्टुभौ । पशूनां । पुष्टानां । यजुरनुष्टुभस्तिस्रः । १७ । न

भल्ुगाय यजुर्बृहती। भवस्य । देवीजगती । रुद्राय । यजुर्बृहती। सूताय यजुर्जगती । मन्ये पञ्च यजुरनुष्टुभः। १८। रोहिताय। यजु पङ्क्ति, हन्तायः यजुरनुष्टुप्‌ । भुवन्तये। यजुर्जगती। ओषधीनां यजुर्बृहती। मन्त्रिणे। यजुर्बृहती । कक्षाणां अनुष्टुप्‌। उ- च्चै । यजुस्त्रिष्टुप्‌। पत्तीनां। तिस्रो गायत्री। ११। आव्याधि- न्या। पङ्क्ति, मत्वनां। अनुष्टुप्‌ । सहमानाय। त्रिष्टुप्‌। आव्या- धिनीनां। पङ्क्ति, निषङ्गिणे। पङ्क्ति। स्तेनानां। यजुष्टुप्‌। निचे- रवे। त्रिष्टुप्‌। अरण्यानां। बृहती॥ २०॥ वञ्चते पङ्क्तिः, स्तायूनां अनुष्टुप्‌। निषङ्गिणे। त्रिष्टुप्‌, तस्कराणां । बृहती । सृकायिभ्य.। पङ्क्ति । मुष्णतां अनुष्टुप्‌ । असिमद्भ्य पङ्क्तिः, विकृन्तानां । बृह- ती॥ २१॥ उष्णीषिणे। त्रिष्टुप्‌। कुलुञ्चानां। बृहती। इषुमद्भ्य.। गायत्री। धन्व। अनुष्टुप्‌। आतन्वा० उष्णिक्‌। प्रतिदधा० पङ्क्ति । आयच्छद्भ्य। गायत्री। अस्यद्भ्योऽनुष्टुप्‌। २२। विसृजद्भ्य. गायत्री। विद्ध्यद्भ्य। उष्णिक्‌। स्वपद्भ्य.। देवीपङ्क्ति, जाग्रद्भ्यः उष्णिक्‌। श- यानेभ्यः। गायत्री। आसीनेभ्य अनुष्टुप्‌। तिष्ठद्भ्य. देवीपङ्क्ति। धा- वद्भ्य. उष्णिक्‌। २३। सभाभ्य। देवीपङ्क्ति, सभापतिभ्य। बृहती। अश्वेभ्य देवीबृहती। अश्वपति०। बृहती, आव्याधिनीभ्य। उष्णि- क्‌। विविध्यन्ति। उष्णिक्‌। उगणा। गायत्री। तृंहती० अनुष्टुप्‌॥ २४ गणेभ्य। देवीपङ्क्ति, गणपति० बृहती, व्रातेभ्य। देवीपङ्क्ति। व्रातप- ति०। बृहती। गृत्सेभ्य देवीपङ्क्ति, गृत्सपति। बृहती, विरूपेभ्य गा- यत्री। विश्व० बृहती। २५। सेनाभ्य देवीपङ्क्ति, सेनानिभ्य। अनुष्टु- प्‌। रथिभ्य। देवीपङ्क्ति, अरथेभ्य। अनुष्टुप्‌। क्षत्तृभ्य। देवीप- ङ्क्ति, सङ्ग्रही०। बृहती,। महद्भ्य देवीपङ्क्ति, अर्भकेभ्य। २६। अनुष्टुप्‌। तक्षभ्य। देवीपङ्क्ति। रथकारेभ्य बृहती, कुलालेभ्य। गा- यत्री। कर्मारेभ्य अनुष्टुप्‌ निषादेभ्यः। गायत्री। पुञ्जिष्ठेभ्य। अनु-

ष्टुप् । नमिभ्य दैवीपङ्क्तिः । नृगयु० । अनुष्टुप् ॥ २७ ॥ नमभ्यः । दैवीबृहती । नमपति० अनुष्टुप् । भवाय । गायत्री । रुद्राय च दैवी बृहती । शर्वाय गायत्री । पशुप० । गायत्री । नीलग्रीवाय । अनुष्टुप् । शितिकंठा० । गायत्री । २८ । कपर्दि० । उष्णिक् । व्युप्त० गायत्री । सहस्रा० । अनुष्टुप् । शत० । गायत्री । गिरिशयायअनुष्टुप् । शिपि० गायत्री, मीढु० । अनुष्टुप् । इषुमते च । दैवीपङ्क्तिः ॥ २९ ॥ ह्रस्वाय । गायत्री । वामना । दैवीपङ्क्ति । बृहती । वर्षीयसे । दैवी पङ्क्ति, वृद्धाय गायत्री । सवृधे च । दैवी बृहती । अग्र्याय पङ्क्ति, प्रथमाय । पङ्क्तिः । ३० । आशवे । गायत्री । अजिराय, पङ्क्ति, शीघ्र्याय । गायत्री । शीभ्याय । बृहती । ऊर्म्याय । गायत्री, अवस्वन्याय । गायत्री । नादेयाय । उष्णिक् । द्वीप्याय । बृहती ॥ ३१ ॥ ज्येष्ठाय । गायत्री । कनि० । पङ्क्ति, पूर्वजाय । उष्णिक् । अपर० गायत्री । मध्यमाय । उष्णिक् । अपगल्भाय । गायत्री । जघन्या । उष्णिक् । बुध्न्याय । दैवीबृहती ॥ ३२ ॥ सोभ्याय । गायत्री । प्रति० गायत्री । याम्याय । गायत्री, क्षेम्याय पङ्क्ति । श्लोक्याय । गायत्री । अवसान्याय । गायत्री । उर्वर्याय । उष्णिक् । खल्याय । बृहती । ३३ वन्याय । गायत्री । कक्ष्याय च । बृहती । श्रवाय । गायत्री । प्रतिश्रवाय । गायत्री । आशुषेणाय । अनुष्टुप् । आशुरथाय । गायत्री । शूराय । गायत्री । अवभेदिने गायत्री । ३४ । बिल्मिने । गायत्री । कवचिने । पङ्क्ति । वर्मिणे गायत्री । वरूथिने पङ्क्ति, श्रुताय । गायत्री, श्रुतसेनाय । गायत्री । दुन्दुभ्या० । उष्णिक् । आह० । गायत्री ॥ ३५ ॥ धृष्णवे । गायत्री । प्रमृ० । पङ्क्ति । निषङ्गि० । उष्णिक् । इषुधि । गायत्री । तीक्ष्णेषो० । उष्णिक् । आयुधपङ्क्ति, स्वायु० । उष्णिक्, सुध०पङ्क्ति । ३६ । स्रुत्याय । गायत्री । पथ्याय बृहती । काट्या० । गायत्री । नीप्या० । बृहती कुल्या० । गायत्री । सर० । गायत्री । नादेया उष्णिक् । वैशं । पङ्

क्तिः । ३७ । कूप्याय । गायत्री । अवट्याय । पङ्क्तिः । वीध्र्याय । गायत्री । आतप्या० पङ्क्तिः मेघ्या० । गायत्री । विद्युत्याय । पङ्क्तिः । वर्ष्याय । गायत्री । अवर्ष्या० । पङ्क्तिः । ३८ । वात्याय । गायत्री । रेष्म्या० । पङ्क्तिः । वास्तव्या० । उष्णिक् । वास्तु० । पङ्क्तिः । सोमाय गायत्री, रुद्राय । बृहती । ताम्राय । गायत्री । अरु० पङ्क्तिः, । ३९ । शङ्गवे । गायत्री । पशु० गायत्री । उग्रा० । गायत्री । भीमा० । बृहती । अग्रेवधा० उष्णिक् । दूरे० । गायत्री । हन्त्रे पङ्क्तिः । हनीयसे । पङ्क्तिः । वृक्षेभ्यः हरिकेशेभ्यः । यजुः पङ्क्तिः । ताराय । दैवी पङ्क्तिः ॥ ४० ॥ शम्भवाय । उष्णिक् । मयो० । गायत्री, शङ्क० । उष्णिक् । मयस्कराय । गायत्री । शिवाय । शिवतरा० । गायत्री ॥ ४१ ॥ पार्याय । गायत्री । अवार्याय पङ्क्तिः । प्रतरणाय । अनुष्टुप् । उत्तरणा० । गायत्री । तीर्थ्याय । गायत्री । कूल्या० । बृहती । शष्प्याय गायत्री । फेन्याय । बृहती ॥ ४२ ॥ सिकत्याय । उष्णिक् । प्रवा० । पङ्क्तिः । किंशि० क्षि० । उष्णिक् । क्षय० पङ्क्तिः, कप० उष्णिक् । पुल० पङ्क्तिः । इरि० । उष्णिक् । प्रप० । पङ्क्तिः ॥ ४३ ॥ व्रज्याय । गायत्री । गोष्ठ्या० । बृहती । तल्प्या० । गायत्री । गेह्या० । बृहती । हृद० । उष्णिक् । निवे० । पङ्क्तिः । काट्या । गायत्री । गह्व । गायत्री ॥ ४४ ॥ शुष्क्या० । गायत्री । हरि० । पङ्क्तिः । पांसव० । उष्णिक् । रज० पङ्क्तिः । लोप्या । गायत्री । उल० । पङ्क्तिः, ऊर्व्या । गायत्री । सूर्म्या० बृहती ॥ ४५ ॥ पर्णाय । गायत्री । पर्ण० गायत्री । उद्गुर० । अभि० । पङ्क्तिः, आखिद०, उष्णिक् । प्रखि० । पङ्क्तिः । इषु० गायत्री । धनु० अनुष्टुप् । किरिकेभ्यः । ४६ । देवानां हृदयेभ्यः साम्नी उष्णिक् । विचि० । उष्णिक् । विक्षि० । नमऽआनिर्हतेभ्यो यजुरुष्णिक् । अथेदं रहस्यं । षडक्षरा यजुर्गायत्री । सप्ताक्षरा । यजुरुष्णिक्, अष्टाक्षरा यजुरनुष्टुप् । नवाक्षरा यजुर्बृहती । दशाक्षरा यजुः पङ्क्तिः, एकादशाक्षरा यजुस्त्रिष्टुप् । द्वादशाक्षरा यजुर्जगती, पञ्चाक्षरा दैवीप

इ'ति', पतुरक्षरादैवी बृहतीत्येतान्येवात्र छन्दांसि सन्ति ॥ २३ ॥

**अश्मान्म्माहतम् ॥**

अश्मन्नूर्जमित्येतद्यजुर्मारुतं । मरुद्देवतं । चित्यपरिषेके विनियुक्तम् । आर्षीत्रिष्टुप् ॥

**अयमंस्तेऽश्मा ॥**

अयमंस्ते त्वदित्यस्याश्मा देवता आग्नी कुम्भकरणे विनियोग' । दैवी बृहती ॥

**मय्याग्नी: ॥**

मयि त्यक्तमित्यस्याग्नोर्देवता पुन. कुमाराणी विनियोग. । दैवीबृहती ॥

**यंन्विष्मऽअभिचारिकम् ॥**

यन्द्विष्मस्तत्स्यैतदाभिचारिकं अभिचारप्रयोजनं । अस्य शुक्रदेवता । यजुर्बृहती । अद्भिसहितस्य कुम्भस्य निरसने विनियोगः ॥

**इमा मऽआग्नेयम् ॥**

इमा मे अग्नइष्टकेत्येतद्यजुरग्निदैवत । इय व्यूहेन द्वानवत्यक्षराविक्षति । पाचनात्परि प्रातयावि जपे विनियोग. ॥

**ऋतवोबृहती पङ्क्तिर्वा ॥**

ऋतवस्थइत्यस्या बृहतीछन्दः पङ्क्तिर्वा । षट्त्रिंशदक्षरत्वाद्विकल्प । द्व्यधिका बृहती न्यूनापङ्क्तिरिति । एषाऽप्याग्नेयी । आग्नेयपदानुवृत्ते. । इष्टकादैवतेति कर्कभाष्ये प्रापणांतजपएव विनियुक्ता ॥

**समुद्रस्य द्वे गायत्र्यौ ॥**

आग्नेयपदमनुवर्तते । तत्र यथार्थं उपरिष्टाद्वक्ष्यते । समुद्रस्य त्वा, हिमस्य त्वेतीमे ऋचौ अग्निदैवते गायत्र्यौ । अग्नेरवकर्षणे विनियुक्ते । अनयोरक्षरौ पादौ दशको । तेन द्व्यधिके ॥

**उपज्मं जगती त्रिष्टुब्वा ॥**

आग्नेयपदमनुवर्तते । उपज्मन्नुपवेतसइतीयमृगग्निर्देवता जगतीछन्दस्का त्रिष्टुप्छन्दस्का वा । इयं चतुश्चत्वारिंशदक्षरा । तेन त्रिष्टुब्भवत्येव, नदीषु आसादमिति व्यूहद्वयेन दृष्ट्वा जगती भवति । अग्नेरवकर्षणे विनियोगः ॥

**अपामिदम् बृहती ॥**

अपामिदमित्यस्या बृहतीछन्दः । अग्निर्देवता आग्नेयपदानुवृत्तेः अग्नेर्विकर्षणे विनियोगः ॥

**अग्ने पावक वसूयवः ॥**

अग्ने पावकेतीमां वसूयव ऋषयोऽपश्यन् ॥

**स नो मेधातिथिः ॥**

स नः पावकदीदिव इतीमां मेधातिथिऋषिरपश्यत् ॥

**एते आग्नेय्यौ गायत्र्यौ ॥**

अग्ने पावक, स न पावकेत्येते अग्निदेवत्ये गायत्रीछन्दस्के । अग्न इत्यस्या दक्षिणपक्षविकर्षणे विनियोगः, स नः पावकेत्यस्याः पुच्छ-विकर्षणे विनियोगः ॥

**पावकया जगती भारद्वाजः ॥**

आग्नेयपदमनुवर्तते । पावकया इतीमामृचमग्निदेवतां जगतीं भरद्वाजऋषिरपश्यत् । उत्तरपक्षे विकर्षणेऽस्या विनियोगः । षा द्वे व्यूहः ॥

**नमस्ते बृहतीमाग्नेयीमृषिसुता लोपामुद्रा ॥**

नमस्ते हरस इतीमामृचं बृहतीमग्निदेवतामृषिसुता ऋषेः पुत्री लोपामुद्रेति नाम्नी अपश्यत् दृष्टवती । अग्नेरारोहणेऽस्या विनियोगः । प्रथमो नवकः । द्वितीयः सप्तकः । तृतीय एकादशकः । चतु-

र्यौ दृश्यकाऽस्ति । तेनेयं समाचिंशदक्षरत्वादेकाधिकाबृहती ॥ २४ ॥

नृपदे पञ्चाग्नेयानि ॥

नृपदे वेडित्यादीनि पञ्चयजूंष्याग्नेयानि । अग्निदेवतानि । चयमावपणायां पञ्चगृहीतहोमे विनियुक्तानि । नृपदे । दैवीबृहती । अप्सुपदे । बर्हिषदे । वनसदे । देव्यः पङ्क्तयः । स्वर्विदे दैवीबृहती ॥

ये देवा जगत्यौ प्राणदेवत्ये ॥

ये देवा देवानां, ये देवा देवेष्विती मे जगत्यौ प्राणदेवत्ये । दधिमधुघृतैरग्नेः प्रोक्षणे विनियुक्ते । व्यूहेनाद्याया पूर्त्ति ॥

प्राणदा बृहतीपङ्क्तिराग्नेयौ ॥

प्राणदा अपानदा इतीयं बृहती वा पङ्क्तिर्वाग्निदेवत्या । अष्टात्रिंशदक्षरत्वाद्विकल्पः अग्नेः सकाशादवरोहणे विनियोगः ॥

अग्निस्तिग्मेनाग्नेयीं गायत्रीं भरद्वाजः ॥

अग्निस्तिग्मेन शोचिषेतीमामृचमग्निदेवत्यां गायत्रीछन्दस्कां भरद्वाजसञ्ज्ञकऋषिरपश्यत् । पञ्चगृहीतहोमेऽस्या विनियोगः । द्वितीये वकारस्य व्यूहः ॥

यऽइमा वैश्वकर्मण्यस्त्रैष्टुभो विश्वकर्माभौवनः ॥

यऽइमा विश्वा इत्याद्या विश्वकर्मा ह्यजनिष्टेत्यन्ता वैश्वकर्मण्यो विश्वकर्मदेवताः त्रिष्टुप्छन्दस्का विश्वकर्माभौवनऋषिरपश्यत् । षोडशगृहीताहुत्यो होमे विनियुक्ताः स्वाप्याहुति । व्यूह, किंस्विदासीदष्टकः, किंस्विद्द्वादशकः, अग्नौ द्वादशको, यासि द्वादशकः । स्वयं । व्यूह, वाचस्पतिं । द्वादशकः । य्युसु, व्यूहः । यथासम । द्वादशकः, तऽत्र । व्यूह । ऋषयः द्वादशकः, नीहारेण । व्यूह । विश्वकर्मा । व्यूह । यमपां गर्भं व्यूहः ॥ २५ ॥

आशुरैन्द्रीर्द्वादश त्रिष्टुभोऽप्रतिरथ ॥

आशु शिशानइत्याद्या अमीषां चित्तमित्यन्ता द्वादश ऋचस्त्रि-ष्टुभ ऐन्द्रदेवत्या इन्द्रस्य पुत्रोऽप्रतिरथसञ्ज्ञकऋषिरपश्यत् । स चय-नेऽग्निनयने ब्रह्मणा जपे द्वादशानां विनियोग । सङ्क्रन्दनेन द्वौ द्वादशको । तथापीय त्रिष्टुप् । द्वौ तु जागतौ यस्या सा जागते 'जग ती चेद्बृहती त्रिष्टुदितिवचनात्' । सऽद्वयहसे द्वादशक, प्रभञ्जन् । द्वा दशक, अस्माक स्मक । जयन्त द्वादशक, अभिगोत्राणि द्वादश का, । इन्द्र आसां दशक । जयतीमा । व्यूह । अस्माकमिन्द्रो द्वाद-शक । उद्धर्षयाङ्गानि द्वौ व्यूहो ॥

अवसृष्टानुष्टुबिषुदेवत्या ॥

अवसृष्टा परेत्येषा अनुष्टुप् इषुदेवत्या । अमीषां ते इत्येतत्पर्यन्ता मासामतिरथेतिसंहिताभाष्ये, अस्मो विनियोगाभावात्यजायति । सा-ध्या वा न भवन्ति । सर्वसाधारणे विष्णवेनैवऋषिरित्यपरे ॥

प्रेत यौद्धयन्त्यौत्यनुष्टुप् ॥

प्रेताजयतेतीयमनुष्टुप् । योद्धारोऽस्या देवतात्वयं, मरुतेत्येवमत्र व्यूह ॥

असौ या मारुती ॥

असौ या इत्यस्या अग्न्यादयस्सविताऽऽदेवता त्रिष्टुप् ॥

यत्र लिङ्गोक्तदेवता पङ्क्ति ॥

यत्र बाणा इतीय लिङ्गोक्तदेवता पङ्क्तिच्छन्दस्का पञ्चपदा च त्वारिंशदक्षरा पङ्क्तिरित्युच्यते । इन्द्रो बृहस्पतिरदितिश्चात्र देव ता लिङ्गोक्ता ॥

मर्म्माणि लिङ्गोक्तैव त्रिष्टुप् ॥

मध्येऽपि गऽइतीयं लिङ्गोक्तानेकदेवता त्रिष्टुप्। मन्त्राग्निचयने चशि-
ष्याय कवचसमर्पणेऽस्या विनियोगः पूर्वासां चतसृणां क्वाऽपि
विनियोगः कल्पकारेण नास्ति। अयमुक्तं त्वामग्निरिति व्यूहः, कश्चन
सोमो वरुणो देवाय लिङ्गोक्ता देवताः। अथवा चाग्निरेव देवता। त-
स्य सर्वोऽग्नित्वेनाप प्रधानत्वात्। न सोमादयः॥

उद्देनं तिस्रोऽनुष्टुभः॥

उद्देनमुत्तरामित्याद्यास्तिस्रोऽनुष्टुप्छन्दस्का ज्ञेयाः॥

आद्याग्नेयी॥

तिसृणामाद्या उद्देनमित्येषाग्निदेवत्या द्वितीये व्यूहे॥

द्वितीयैन्द्री॥

पूर्वोक्तानां तिसृणां मध्ये द्वितीया इन्द्रेममित्येषा इन्द्रदेवत्या॥

तृतीया लिङ्गोक्तदेवता॥

पूर्वोक्तानां तिसृणां मध्ये तृतीया, यत्र कूर्मस्त्वेषा लिङ्गोक्तदेवता, तृतीये व्यूहः। घृतोपितादौदुम्बरसमिदाधाने विनियोगः। आसां। अग्नोदुक्त्यस्य कल्पादिपूर्वमुक्तं। अत्र मदीतस्येयत्योर्धमगे विनियोग इति विशेष.॥

पञ्चदिशं पञ्चयज्ञाग्निसाधनवादिन्यः॥

पञ्च दिशो दैवीरित्याद्याः पञ्चर्चो यज्ञाग्निसाधनवादिन्यः य-
ज्ञं चाग्निसाधनं यागसाधनद्रव्यं वदन्तीति यज्ञाग्निसाधनवादिन्यः।
अथासां छन्दांसि क्रमेणाह॥

आद्ये द्वे त्रिष्टुभौ॥

आसां पञ्चानां मध्ये प्रथमद्वितीये पञ्चदिशः समिद्धोऽपमत्यावि-
त्येते द्वे त्रिष्टुभौ। पञ्चदिशः दिशो देवताः। आद्यत्रयोदशकः। द्वि-
तीयएकादशकः। तृतीयो द्वादशकः। चतुर्थो दशकः। इत्यधिकाउ-

भयव इतिनवक, व्यूहेनकन्द पूर्त्ति, अग्निर्देवता ॥

तृतीया पङ्क्तिर्बृहती वा ॥

पञ्चानां मध्ये तृतीया देव्याय धर्त्र इत्येषा पङ्क्तिर्वा । बृहतीवा । अष्टात्रिंशदक्षरत्वादिकस्य: । अत्राप्यग्निर्देवता । अक्षरसख्यैव प ङ्क्तिर्बृहती वा पादाक्षरनियमस्तु नास्ति ॥

चतुर्थी बृहत्येव ॥

पूर्वोक्तानां पञ्चानां मध्ये चतुर्थी वीतहं॰ हविरित्येषा बृहत्ये॰ व । बृहतीछन्दस्केन, यकारव्यूहेनाक्षरैर्बृहती । अत्रापि पादाक्षर॰ नियमो नास्ति । हविर्यज्ञ देवता ॥

अन्त्या त्रिष्टुप् ॥

पञ्चदिग्भ्यइत्यादिपञ्चानामन्त्या सूर्यरश्मिरितीयं त्रिष्टुप् । अग्नि रेव देवता । पञ्चानामपि चित्यंमति गमने विनियोगः ॥

विमानो द्वे आदित्यदेवते ॥

त्रिष्टुप्इत्यनुवर्त्तते । विमानऽएष,ऽउच्चा समुद्रऽइतीमे द्वे ऋचौत्रि॰ ष्टुभौ । आदित्यदेवे । गृहस्पोपधाने विनियुक्ते । विषमस्य व्यूह॰ ॥

आद्या विश्वावसोः ॥

विश्वावसुरस्या ऋषिरित्यर्थः ॥

द्वितीयाऽप्रतिरथस्य ॥

पूर्वोक्तयोर्मध्ये द्वितीया उच्चा समुद्रइत्येषा अप्रतिरथस्यार्षं । अ॰ प्रतिरथोऽस्या ऋषिरित्यर्थ, इन्द्र विश्वाऽइत्यस्यर्थ्योदि प्रागुक्त । अ तिक्रमणेऽस्य विनियोगइति विशेषः ॥

देवहूर्विधृतिरनुष्टुब्यज्ञदेवत्या ॥

देवहूरित्यस्या विधृतिऋषिरनुष्टुप्छन्दो यज्ञोदेवता त्रिंशदक्षर त्वादियं द्व्यूनानुष्टुप । उष्णिग्वेति संहिताभाष्ये । अत्रापि पादा

क्षरे नियमो नास्ति ॥

**वाजस्यैन्द्र्यनुष्टुप् ॥**

वाजस्य मा प्रसवइतीयमैन्द्री इन्द्रदेवत्या अनुष्टुप्छन्दस्का ॥

**उद्ग्राभमैन्द्राग्न्यनुष्टुवेव ॥**

उद्ग्राभं च निग्राभं चेतीयमृगैन्द्राग्नी । इन्द्राग्नी अस्या देवता अनुष्टुप्छन्दः, देवहूरित्यादीनामग्निप्रतिगमने विनियोगः । तृतीयो नवकः । चतुर्थः सप्तकः तेन पूर्णैव ॥ २६ ॥

**क्रमध्वं पञ्चाग्नेय्योऽऽद्यानुष्टुब्गायत्रीत्रिष्टुप् । ततो बृहती पिपीलिकमध्या ॥**

क्रमध्वमग्निनेत्याद्याः पञ्चर्चोऽग्निदेवताः तासां पञ्चानां मध्ये आद्या क्रमध्वमित्यनुष्टुप् । अत्रायं व्यूहः, ततोऽनन्तरं द्वितीया गायत्रीमनुष्टुप्, अत्र तृतीयः षष्ठक, चतुर्थो द्वादशकः । तेन पूर्तिः । ततोऽनन्तरं तृतीया पृथिव्याऽअहं पिपीलकमध्यावृहती । यस्याः प्रथमतृतीयौ नवोदशकौ । मध्यगो द्वितीयोऽष्टकः सा पिपीलिकमध्यावृहतीत्युच्यते । "त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्येत्युक्तेः" । प्रथमस्त्रयोदशकः द्वितीयोनवक , तृतीयचतुर्दशकइति षट्त्रिंशदक्षरत्वात्बृहती त्रिपादष्टिष्टमध्या पिपीलिकमध्येतिवचनात्पिपीलिकमध्या च ॥

**ततोऽनुष्टुप्त्रिष्टुबन्त्या ॥**

ततोऽनन्तरं चतुर्थी अयंन्तइत्यनुष्टुप् । पादे व्यूहः । ततः च ञ्याऽग्नेमेहीति पञ्चमी त्रिष्टुप् । द्वितीये व्यूहः, चतुर्थे तु अस्तीति ति व्यूहेऽपि दशकः । क्रमध्वमित्यादिपञ्चानामग्न्यारोहणे विनियोगः ॥

**अग्ने सहस्राक्षविराडाग्नेयी ॥**

अग्ने सहस्राक्षेत्येषाग्निदेवत्या विराट्छन्दस्का। यस्या दशाक्षराश्चत्वारः पादाः सा विराट्पङ्क्तिः। अथ चतुष्पदा विराड्दशकाद्युक्तेः"। चतुर्थोऽत्र नवकः, स्वाहा। पृथग्यजु। स्वयमातृण्णायामुपरि पयोहोमे विनियोगः॥

सुपर्णौ द्वे पङ्क्तित्रिष्टुभौ॥

सुपर्णोऽसि गरुत्मानसीति द्वे ऋचौ अग्निदैवत्ये यथाक्रमं पङ्क्तित्रिष्टुभौ। सुपर्णोऽसि पङ्क्तिः। गरुत्मानसि त्रिष्टुप्। अग्निनिधाने विनियोगः। आग्नेयीत्यनुवर्तते। तत्राग्नेय्यौ इति निपरिपक्ष्यते। अत्र सुपर्णः असीत्येवं व्यूह्य तेनेयं चत्वारिंशदक्षरा पङ्क्तिः। पञ्चपदा च पादानामक्षरसंख्या नियता नास्ति। गरुत्मानसीत्यत्र तृतीयेन व्यूह्य चतुर्थो द्वादशकोपेतः॥

तां सवितुः सावित्रीं त्रिष्टुभं पुरस्ताज्ज्योतिषं कण्वो ददर्श॥

तां सवितुरित्येतां सवितृदेवत्यामृचं त्रिष्टुभं कण्वऋषिर्ददर्श। अत्र वरेण्यस्येति व्यूहः। पुरस्ताज्ज्योतिषमिति केचित्पठन्ति। तदयुक्तं। तल्लक्षणस्याभावात्। तेन त्रिष्टुभं कण्वो ददर्शेत्येव सत्यः पाठः, संहिताभाष्ययोस्तु पुरस्ताज्ज्योतिषमित्यपि पाठो लिखितोऽस्ति। तदा द्व्यधिका सा भवति गर्भीमथसमिदाधाने विनियोगः॥

विधेमाग्नेयी गृत्समदस्त्रिष्टुभन्त्यास्त्रिस्थानोऽग्निर्देवता॥

विधेम तइतीमामृचमग्निदेवतां त्रिष्टुभं गृत्समदोऽपश्यत्। अस्या अन्त्यस्त्रिस्थानोऽग्निर्देवता। त्रीणि स्थानानि यस्यासौ त्रिस्थानः। तानि त्रीणि स्थानानि मन्त्रमध्ये कथितानि सन्ति। वैकङ्कतसमिदाधानेऽस्या विनियोगः॥

प्रेद्धो विराडाग्नेयी वसिष्ठस्य ॥

प्रेद्धोऽअग्न इत्येषा अग्निदेवत्या विराट्त्वसिष्ठस्यार्षं वसिष्ठोऽस्या ऋषिरित्यर्थः । अस्या दशाक्षरास्त्रयः पादाः वर्तन्ते, द्वितीयस्य व्यूहेन पूर्त्तिः । तेनेयं विराडनुष्टुप् । "दशकास्त्रयो विराडिति वचनात्" । औदुम्बरसमिदाधाने विनियोगः ॥

चित्तिं वैश्वकर्मण्यतिजगती ॥

चित्तिं जुहोमीतीयमृक् विश्वकर्मदेवता अतिजगतीछन्दस्का । "द्वापञ्चाशदक्षरा अतिजगतीत्युच्यते" । अत्र द्वाभ्यां व्यूहाभ्यां पूरणं । स्रुवाहुतिहोमे विनियोगः ॥

सप्त तेऽग्न आग्नेयी त्रिष्टुप् सप्तऽऋषीणाम् ॥

सप्त तेऽअग्न इत्येषा अग्निदेवत्या त्रिष्टुप्छन्दस्का सप्तऋषीणामार्षं सप्तऋषयोऽस्या ऋषय इत्यर्थः, चतुश्चत्वारिंशदक्षरेयं । येन द्व्यधिका त्रिष्टुप् । सर्वाहुतिहोमेऽस्य विनियोगः ॥ २७ ॥

शुक्रज्योतिः पञ्च मारुत्यः ॥

शुक्रज्योतिरित्याद्याः पञ्चऋचो मारुत्यः । मरुतोऽमीषां देवता इत्यर्थः । ते च शुक्रज्योतिरित्यादिनामकाः । गणलिङ्गात् । ते चैकैकस्यामृचि सप्त सन्ति । तेन प्रत्यृचं सप्तानां सप्तानां गणानां नामानामुद्देशकार्थः, तासां क्रमेण छन्दांस्याह ॥

आद्या चतुर्थी चोष्णिक् ॥(१)

पञ्चानां मध्ये आद्या शुक्रज्योतिरितीय उष्णिक्, चतुर्थी ऋतश्चेति द्वयमुष्णिक् । प्रथमाऽष्टाविंशत्यक्षरा । चतुर्थी एकाधिका ।

द्वितीया तृतीया च गायत्री ॥(२)

---

(१) आद्या तृतीयोष्णिक् इति कात्यायनसर्वानुक्रमपाठः ॥

(२) द्वितीया चतुर्थी च गायत्री इत्यपि तत्रत्यः पाठः ॥

अस्यां पञ्चां द्वितीया इंद्रश्चेति गायत्री । ऋतथेति तृतीया च गायत्री ॥

पञ्चमी जगती ॥

पञ्चानां मध्ये पञ्चमी इंद्रवायूइति जगती । अष्टाचत्वारिंशदक्षरत्वात् ॥

षष्ठी गायत्र्युष्णिग्वा ॥

षष्ठी आतवानित्येषा गायत्री । उष्णिग्वा । षड्विंशत्यक्षरत्वाद्विकल्पः । पञ्चानामपि क्रमेण मारुतपुरोडाशहोमे विनियोगः ॥

इन्द्रं दैवीर्मारुतम् ॥(१)

इन्द्रं दैवीरित्येतन्मारुतं दैवीर्यजु र्व्यूहेन षट्पञ्चाशदक्षरा शक्वरी । जपे विनियोग ॥

इमं वयोऽष्टर्चं आग्नेयस्त्रैष्टुभोऽनुवाको यज्ञस्तुतिर्घृतस्तुतिर्वा यशोहाराभिवादिनी वा ॥

इमाएतानित्येष वयोऽष्टर्चोऽनुवाकोऽग्निदेवतस्त्रिष्टुप् छन्दस्कः एषोऽनुवाको यज्ञस्तुतिर्वा यशोहाराऽभिवादिनी घृतस्तुतिश्च, मयि यशोहाराणां भविष्यति तदभिवादिनी घृतस्तुतिरप्येव दृश्यते सकलस्यानुवाकस्य जपे वाचने वा विनियोगः ॥

घृतं मिमिक्षे गृत्समदः ॥

अग्निमनुवाके घृतं मिमिक्ष इत्यस्या गृत्समदऋषिः ॥

समुद्राद्वामदेवः ॥

समुद्रादूर्मिं । इत्यस्या वामदेवऋषिः ॥

चत्वारि शृङ्गा यज्ञपुरुषदैवत्यस्त्रैष्टुभो मन्त्रः ॥

---

(१) इन्द्र दैवीर्मारुती इत्यत्र इत्यादि तथैव तः ॥

राणां वायुर्यज्ञेन इत्यादीनां यजुरनुष्टुप्। भुवनस्य पतये स्वाहेत्यादीनां नवाक्षराणां यजुर्बृहती। दशाक्षराणां सुखाय वैनर्ट॰ प्रिनायेत्यादीनां यजुः पङ्क्तिः। एकादशाक्षराणां विमर्ठं प्रिमस्पीत्याग्नमाय स्वाहेत्यादीनां यजुस्त्रिष्टुप्। द्वादशाक्षरस्य पशुत्रयः। प्रकरयो द्विशपनाऽस्थस्य यजुर्जगती एवमनुमानमपि कल्पनीयं, अत्र च चत्वारिंशताऽभ्येकाधिकानि यजूंषि सन्ति। तत्र वाजस्य प्रसस्यावास ज्येष्ठ्यं च मे, वसु च मे इतिकण्डिकाद्वयवर्जितासैकोनविंशतिकण्डिकासु त्रयोदश त्रयोदश यजूंषि सन्ति। ज्येष्ठ्यं च मइत्यस्यां तु पञ्चदश यजूंषि। वसु च मे इत्यस्यां नव। अग्निश्च मे घर्मश्च मइत्यस्यां कामास्त्रयोदश। यजूंषि तु द्वादशैव। पशुत्रयः प्रकरयो द्विशपनस्त्येकमेव यजुः पञ्च कामास्त्रयः। यजुर्जगतीछन्दो, अर्कं च म इत्यस्यां कामा दश यजूंषि नवैव, अहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च म इत्येतावदेकं यजुः। पङ्क्तिनपट्कामाः। प्राजापत्यानुष्टुप्सामानुष्टुप् छन्दः, एका च मइत्यस्यां त्रयस्त्रिंशत्। चतस्रश्च मइत्यस्यां अष्टाविंशतिः। त्र्यविश्च म इत्यस्यामेकादश। पष्ठवाट्च मइत्यस्यां नव, वाजायस्वाहेत्यस्यां चतुर्दश। तत्र त्रयोदश स्वाहान्तानि। अन्तिमं चतुर्दशं व्यूहाभ्यामष्टाविंशत्यक्षरा प्राजापत्यानुष्टुप् तस्य छन्दः। आयुर्यज्ञेनेत्यस्यैकविंशतिः। तत्र द्वादश कल्पन्तान्तानि। स्तोमश्चेत्यादीनि षट्। स्वर्देवा अगन्माऽमृता अभूमेत्येकं। साम्नगायत्री तस्य छन्दः। व्यूहेन। प्रजापतेः प्रजाऽ अभूमेत्येकं। यजुर्बृहती। वेट्स्वाहेत्येकं। दैव्यनुष्टुप्, एवं च चत्वारिंशताभ्येकाधिकानि पूर्णानि॥

वाजसनेयीयठं॰ समाप्तम् ॥

समाप्तानामृचां समाहारः समर्चं वाजसनेयीयसम्बन्धि समर्चं अभिधीयत इति शेषः। वाजस्य नित्यपा अपि ऋचो मन्त्र गणनाय-

सप्तचो भवन्ति । षष्ठ्यासु ऋचो भवन्ति । षष्ठ्यासु ऋच्यादि सा- मुताम् ॥

विश्वे त्रैष्टुभं (१)वैश्वदेवं सुधोधानासः ॥

विश्वे पयोत्येतत्त्रिष्टुप् छन्दस्कं विश्वेदेवदेवतं सुर्गाधानासोऽपश्यत् । अत्र द्वितीये व्यूहः । वाजिनकाजमसनीयहोमे,ऽस्य सप्तर्चस्य विनियोगः ॥

वाजो नस्त्रिस्रोऽग्नदेवत्या आद्याऽनुष्टुप् द्वे त्रिष्टुभौ ॥

वाजो नः सप्त,इत्याद्यास्तिस्र ऋचोऽग्नदेवत्याः । तासामाद्याऽनुष्टुप् छन्दस्का वाजो नः सप्तदशया । तृतीये व्यूहः । ततो वाजो नो अद्य, वाजः पुरस्तादितीमे द्वे त्रिष्टुभौ ॥

सम्मा विराजाऽऽग्नेय्यौ ॥

सम्मा, पयः पृथिव्यामित्यनयोः प्रजापतिर्ऋषिः अग्निर्देवता विराड- नुष्टुप्छन्दः । देवस्य त्वा मा०सवितादेव०प्राजापत्या बृहती छन्दोऽभिषेके विनियोगः ॥

सरस्वत्यै लिङ्गोक्तम् ॥

सरस्वत्यै म०यजमानो देवता प्राजापत्या बृहतीछन्दोऽभिषेके विनियोगः ॥

ऋताषाडृगन्धर्वो ऋषरसः ॥

ऋताषाट्प०ऋतधामाग्निप्राजापत्या बृहती । इषिरो व्यूहेन ऋग्बृहती । तस्यापो आसुरी उष्णिक्, मुदः । एकाधिकाप्राजापत्या पङ्क्तिः । तस्य दक्षिणा । एकाधिकाप्राजापत्यानुष्टुप् । प्रजापतिः । प्राजापत्या त्रिष्टुप् । तस्य ऋक्सामानि । ऋग्गायत्री । राष्ट्र

(१) वैश्वदेवो इति काण्वपाठः ॥

भृद्धोमे ऋताषाडित्यादिद्वादशमन्त्राणां विनियोगः ॥

स नः प्राजापत्या प्रस्तारपङ्क्तिः ॥

स नो भुवनस्यपत इतीयं प्रजापतिदेवत्या । अस्याः प्रस्तारपङ्क्तिश्छन्दः यस्या आद्यौ द्वादशकौ अन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः । "आद्यौ चेत्प्रस्तारपङ्क्तिरित्युक्तेः" रथशीर्षे पञ्चाहुतीहोमेऽस्या विनियोगः । अत्र तृतीयो नवकः । चतुर्थः स्वाहाकारेण सहाष्टकः ॥

समुद्रोऽसि वायव्यानि त्रीणि ॥

समुद्रोऽसि नभस्वानित्यादीनि त्रीणि यजूंषि वायुदेवतानि वातहोमे विनियुक्तानि । समुद्रोऽसि व्यूहेन स्वराडनुष्टुप् । मारुतोऽसि । स्वराडुष्णिक् । अवस्यूरसि । प्राजापत्याबृहती, याद्ये पक्ने, या च द्वयमयोः पाशुकहोमे विनियोगः ॥

रुचमाग्नेय्यनुष्टुप् ॥

रुचं नो धेहीतीयमग्निदेवत्याऽनुष्टुप् होमे विनियुक्ता । प्रथमोऽंश नवकः । नैतैकाधिका ॥

तत्त्वा वारुणी त्रिष्टुप् शुनःशेप ॥

तत्त्वा यामीमामृचं वरुणदेवत्यां त्रिष्टुभं शुनःशेपऋषिरपश्यत् । आज्याहुतिहोमेऽस्या विनियोगः ॥

स्वर्णाग्नेयानि पञ्च ॥

स्वर्ण घर्मइत्यादीनि पञ्च यजूंष्यग्निदैवतानि । आज्याहुतिहोमएवैषां विनियोगः । पञ्चानामपि यजुर्गायत्रीछन्दः द्वितीये व्यूहः । दैवीपङ्क्तिः ॥

अग्निं युनज्म्याग्नेय्यस्तिस्रआद्ये द्वे त्रिष्टुभौ पङ्क्तिस्तृतीया ॥

अग्निं सुम्नाय, इमो अग्ने पञ्च, इन्दुर्दक्ष इत्येतास्तिस्र ऋचोऽग्निदेवताः । तासां आद्ये द्वे त्रिष्टुप्छन्दस्के । तृतीया इन्दुर्दक्ष इत्येषा पङ्क्तिः । अग्नियोजने तिसृणां विनियोगः । तत्र पदं । द्वादशकः । इमो अग्ने । द्वादशकः । याभ्यां द्वौ व्यूहौ । अत्र प्रथम. चतुर्दशकः, तेनैकाधिका । इन्दुर्दक्षः नवकः । द्वितीयतृतीयौ एकादशकौ । चतुर्थो नवकः । तेन चत्वारिंशदक्षरा पङ्क्तिः ॥

## दिवो द्वे आग्नेय्यौ परोष्णिङ्महापदपङ्क्ती ॥

दिवो मूर्धासि, विश्वस्य मूर्धन्नितीमे द्वे ऋचावग्निदेवत्ये यथाक्रमं परोष्णिङ्महापदपङ्क्तिः । तत्र दिवो मूर्धा परोष्णिक् प्रथमद्वितीयपदावाद्यावष्टकौ । तृतीयो द्वादशकः । तेनैकाधिका आद्यपादयोरक्षरनियमो नास्ति, विश्वस्य मूर्धन्निति जगती महापदपङ्क्तिः । अष्टाचत्वारिंशदक्षरा । महापङ्क्तिलक्षणं छन्दःपरिभाषायां नास्ति । महापङ्क्तिलक्षणं विद्यते । पञ्चकः सप्तकः । षट्कौ दशकौ नवकौ पञ्चपदाष्टका वा महापङ्क्तिरिति, तेनात्र विश्वस्य मूर्धन्निति प्रथमो यकारव्यूहेन षडक्षरः पादः, तिष्ठसीत्यादिर्द्वितीयः सप्तकः, समुद्रे ते तृतीयो दशकः । अपो दक्षेत्यष्टकः, पृथिव्या इत्यपि नवकः । तेनात्र परोष्णिङ्महापङ्क्तीत्येव पाठो युक्तः । इतरस्तु प्रमादपाठः अग्निविमोके त्वयोर्विनियोगः ॥

## इष्टो यज्ञो द्व्यृचं यजमानाग्निदैवत्यं गालवः । आद्योष्णिग्द्वितीया गायत्री ॥

इष्टो यज्ञ इत्येतद्व्यृचं ऋग्द्वयं क्रमेण यजमानाग्निदेवतं गालवस्यापरमार्षम् अस्मिन्द्व्यृचे आद्या इष्टो यज्ञस्त्वुष्णिक् अष्टाविंशत्यक्षरत्वात् । पादाक्षरनियमो नास्ति द्वितीया इष्टोऽग्निर्गायत्री । आद्यः सप्तकः । तेनैकोना । अगाहमिति पूर्णा वा । आग्नि-

असमिष्टयजुर्होमेऽनयोर्विनियोगः ॥

यदाकूतादृचमाग्नेयं विश्वकर्मणा ॥

यदाकूतात्समसुस्रोद्धृदिस्थादित्यृचं अग्निदैवत्यं । विश्वकर्मणऋषे-
दार्षं विश्वकर्माऽपश्यदित्यर्थः । स्रुवाहुतिहोमे विनियोगोऽस्या ऋ-
चः ॥

तृतीया दैवी वा ॥

अग्निवदृचं तृतीया एतं जानाथेत्येषा दैवी वा । देवा अस्या ऋषय इ-
त्यर्थः । आग्नेयी वेति विकल्पः ॥

आद्या जगती ॥

अनयोराद्या यदाकूतादित्येषा जगती । अत्र चतुर्थश्चतुर्दशकः ।
अन्ये एकादशकाः । तृतीये व्यूहः ॥

तिस्रस्त्रिष्टुभः ॥

एतꣳ॰ सधस्थ, एतं जानाथ, उद्बुध्यस्वेत्येतास्तिस्र ऋचस्त्रिष्टुभः ।
एतꣳ॰ सधस्थेत्यत्र चतुर्थे व्यूहः । एतं जानाथ । व्यूहः । उद्बुध्यस्वे-
त्यत्र तृतीयो दशकः, चतुर्थो द्वादशकः ॥

चतस्रोऽनुष्टुभः ॥

येन वहसि । प्रस्तरेण, यद्दत्तं, यत्र धारा इत्येताश्चतस्र ऋचोऽनु-
ष्टुभः । सर्वेषु इत्यत्र सुवर्देवेष्विति चतसृष्वपि चतुर्थपादे व्यूहः,
मधोर्घृतस्येत्यन्त्यतः ॥

अग्निरस्म्यग्न्यद्वैतवादिनीं त्रिष्टुभं देवश्रवोदेववात-
श्च भारतौ ॥

अग्निरस्मि जन्मना इतीमामृचं त्रिष्टुप्छन्दस्कामग्न्यद्वैतवादिनीं
भारतौ भरतपुत्रौ देवश्रवोदेववातावेतौ द्वावृषी अपश्यतां । अस्या अ-
ग्निर्देवता । आत्मनोऽग्निना सहाद्वैतमैक्यं वदतीत्यग्न्यद्वैतवादि

नीग्रस्या विनियोगो यज्ञकर्मणि नास्ति ॥

ऋचो यजु ॥

ऋचो नामासीत्येतद्यजु । एकवचनादेकमेव सप्तदशाक्षरो व्यूहेन अनुष्टुब्गायत्री आख्यातदेवता । अस्याऽपि विनियोगो नास्ति ॥

येऽग्नयोऽनुष्टुबाग्नेयी ॥

ये अग्नय पावजन्यादतीयमनुष्टुबग्निर्देवता । अग्नेरुपस्थाने विनियुक्ता । अध्या पृथिव्या । व्यूह ॥ २० ॥

वार्त्रहत्याय सप्तर्चमिन्द्रोऽपश्यत् ॥

आग्नेयपदमनुवर्तत, वार्त्रहत्यायेत्यादि सप्तर्च सूक्तं दृष्ट्वा चित्वा निर्दिशन् इन्द्रऋषिरपश्यत् । "इदमसप्तर्चमपश्यदिति युत" । पुरीषवत्या चयनस्थाने विनियोग ॥

आद्ये द्वे वार्त्रघ्न्यौ गायत्रित्रिष्टुभौ विश्वामित्रस्य च ॥

अत सप्तर्चे आद्ये द्वे ऋचौ वार्त्रहत्याय, सहदानुमित्येते वार्त्रघ्न्यौ क्रमेण गायत्री त्रिष्टुभौ विश्वामित्रस्य च ऋषेरार्षं चकारादिन्द्रस्य च । अनयाद्विष्टिविश्वामित्रो द्रष्टाऽपूर्वी स्यादस्यार्थं । विश्वामित्रेन्द्रस्य आर्षी साभूदिति । चकार समुच्चयार्थ । अतएव यज्ञादृन्यायविशेषात्मिका ऋ यथा सामान्यस्यापवादो भवतीति गम्यते, पूतनामाह्वाय चेत्यत्र व्यूह ॥

विश्वेऽनुष्टुप् ॥

वि मदरन्द्रेत्येतयमनुष्टुप ॥

मृगो न त्रिष्टुप् ॥

मृगो न भीमवतीय त्रिष्टुप् ॥

प्रथमाऽश्यामो भारद्वाज ॥

यथवा विन इन्द्रइतीमा भारद्वाजस्य पुत्र शास ऋ पिरपश्यत् । वि न शासोभारद्वाजइति मानुतोऽपि इन्द्रेण ऋषिणास्य विशेषोप दिष्टेन इन्द्रएवसमर्पमपश्यदितिपल्वचशुमन शासस्य बाधो माभू दिति पुनरुक्त । इन्द्रोऽप्यत्र अवत्येव । प्रत्यक्षयुक्तत्वात् ॥

द्वितीया अयऐन्द्र ॥

द्वितीयां मृगो नेतीमा "इन्द्रस्य पुत्रोजयसमन्त्रदृ पिरपश्यत् । यथा पौंद्री द्वितीययाओ च प्रत्यक्षयुक्ते" ॥

द्वे वैश्वानर्यौ गायत्रीत्रिष्टुभौ ॥

वैश्वानर, पृष्टोदिवीतीमे द्वे ऋचौ वैश्वानरदेवते क्रमेण गायत्री त्रिष्टुभौ । वैश्वानरो गायत्री । पृष्टोदिवि त्रिष्टुप् ।

पृष्टो दिवि कुत्सस्य च ॥

पृष्टो दिवीत्येषा कुत्सस्यार्षं चकारादिन्द्रस्य च । एषा इन्द्रकु त्सौ द्वावप्यृषी द्रा इत्यर्थं । पचापि चकार समुच्चयार्थं ॥

अश्याम द्वे त्रिष्टुभावाग्नेय्यौ कामवत्यौ ॥

अश्याम त । वय ते, अग्नेतीमे द्वे ऋचौ त्रिष्टुभौ अग्निदेवते काम शब्दवत्यौ ॥

अश्याम भरद्वाजस्य च ॥

अश्याम ॥ इत्येषा भरद्वाजस्यार्षं । चकारादिन्द्रस्य च । चकार समुच्चयार्थं । इन्द्रभरद्वाजावस्य ऋषी इत्यर्थं ॥

वयं ते कात्यस्योत्कीलस्य ॥

त्रिष्टुप्पदमनुवर्त्तते । वय तइत्येषा त्रिष्टुप् कात्यस्य कतापत्यस्यो त्कीलस्य । आर्षमिति शेष । यस्मात् कतस्य पौत्र उत्कील ऋषिरि त्यर्थं । त्रिष्टुपद्यामपन्देविकल्पेन विनियोग ॥

धामच्छदनुष्टुव्वैश्वदेवी ॥

धामच्छदग्निरित्येषा विश्वदेवदेवताऽनुष्टुप् द्वाभिषवस्थानपदे चि-
त्युपस्थाने विनियुक्ता, प्रथमः समाप्तः । चतुर्थे व्यूहं कृत्वा छन्दः प-
रयम् ॥ २१ ॥ (१)

अथ सौत्रामणी ॥

अथानन्तरं सौत्रामणी । अभिधीयत इति शेषः । सौत्रामणीम-
न्त्राणामृष्यादिकमभिधीयत इत्यर्थः ॥

प्रजापतेरार्षमश्विनोः सरस्वत्याश्च ॥

सा सौत्रामणी प्रजापतेरार्षं । सरस्वत्याश्चार्षं । सौत्रामण्यां म-
न्त्राणां प्रजापतिरश्विनौ च सरस्वती च एते ऋषयः सन्तीत्यर्थः ॥

स्वाद्वीं त्वाऽनुष्टुप् सुरासोमदेवत्या ॥

स्वाद्वीं त्वा स्वादुनेत्येषानुष्टुप् अस्याः सुरासोमौ देवता । सुरा-
रूपः सोमः सुरासोम इत्युच्यते । अथ प्रथमोऽष्टकः तृतीयोऽष्टकः ।
चतुर्थसप्तक. । सुरायाः संसर्जने विनियोग. ॥

सोमोऽसि चत्वारि सौराणि ॥

सोमोऽस्यश्विभ्यामित्यादीनि चत्वारि यजूंषि सौराणि सुरा-
संसर्जनएव विनियुक्तानि । सोमोऽसि । दैव्यनुष्टुप् । अश्विभ्यां यजु-
र्बृहती ॥

परीतो भारद्वाजः सौमीं बृहतीम् ॥

परीतोषिञ्चतेतीमां बृहतीं सोमदेवत्यां भरद्वाजऋषिरपश्यत् ।
अयोऽष्टकाः तृतीयो व्यूहाभ्यां द्वादशकः । नैनेयं बृहती । पयसा सु-
रापरिषेके विनियोगः ॥

वायोर्मृचो गायत्रः सौम्यऽस्याभूतेः ॥

---

(१) काण्वसर्वानुक्रमेऽत्रैव द्वितीयाध्यायः समाप्त. कृतः ॥

माध्वी: पूतहयं पयः सोमदेवतो गायत्रीछन्दस्क आभूतिरार्षं प-
स्य तृचस्याभूतिरार्षं पिरित्यर्थं । सुरापावनेऽस्य तृचस्य विनियोगः ।
इन्द्रस्य युग्य, माऽहृक्सोमइत्यनयोर्व्यूह ॥

## ब्रह्मक्षत्र त्रिष्टुप् सुरासोमदेवत्या ॥

ब्रह्मक्षत्रमितीयं त्रिष्टुब्बृहती सुरासोमदेवता । पयः पावने विनियोगः । आद्यो द्वादशकः । द्वितीयस्त्रयोदशकः अन्त्यावेकादशकौ । तेन अधिका त्रिष्टुब्भवति त्वा । यजुस्त्रिष्टुप् । सरस्वत्यै त्वा आसुरीअनुष्टुप् । इन्द्राय त्वा सुत्राम्णे साम्नीउष्णिक् । उपयामगृहीतोऽसि मध्ये गराऽन्तं एष ते योनिः प्राजापत्या गायत्रीछन्दः ॥

## नाना हि जगती सुरासोमदेवत्या ॥ (१)

नाना हि वामितीयं जगती अश्व्या सुरासोमदेवता । सुराग्रहा- णां ग्रहणे मध्ये विनियुक्ता । द्वितीयो व्यूहेनैकादशकः, चतुर्थो व्यू- हेन द्वादशकः, कुवविदङ्गेति छन्दः पूरणं । आश्विनं तेजः । यजुर्जग- ती । सारस्वती वीर्यम् । ऐन्द्रं बलं । यजुस्त्रिष्टुप् । उपयामगृहीत- स्येति मध्ये स्थितं । एष ते योनिरिति यजुः प्राजापत्या गायत्रीछन्दः ॥

## तेजोऽसि पयो देवत्यानि ।

तेजोऽसीत्यादीनि त्रीणि यजूंषि पयोदैवत्यानि तेजोऽसि यजुर्बृ- हती । आश्विने पयोग्रहे गोधूमकुवलचूर्णावापे विनियोगः ॥

## वीर्यमसि ॥

यजुः पङ्क्तिः । सारस्वते पयोग्रहे उपवाकबदरचूर्णावापे वि- नियोगः । वीर्यमसि । यजुः पङ्क्तिः । सारस्वते पयोग्रहे बदरा- कबदरचूर्णावापे विनियोगः । बलमसि । यजुः पङ्क्तिः । ऐन्द्र- पयोग्रहे एव कर्कन्धुचूर्णावापे विनियोगः ॥

---

(१) अस्यास्ति मन्त्रे ... काण्वसंहितानुक्रमणीकोऽधिको भेदः ॥

ओजोऽसि सुरादेवत्यानि ॥

ओजोऽस्योजो मयि धेहीत्यादीनि त्रीणि यजूंषि सुरादेवत्यानि । ओजोऽसि यजुरनुष्टुप् सुराग्रहस्योपरि विनियोगस्तथाप्यमपि मन्युरसि । यजुः पङ्क्तिः । सहोऽसि । यजुर्बृहती ॥

या व्याघ्रं० हैमवर्चिरनुष्टुब्विषूचिकास्तुतिः ॥

या व्याघ्रमित्येषाऽनुष्टुप् हैमवर्चेः आर्षमिति शेषः । हैमवर्चि-संज्ञोऽस्याः ऋषिरित्यर्थः । इयं विषूचिकायाः व्याधिविशेषस्य स्तुतिः सैवात्र देवता । स्तुतिभाजो देवतात्वसम्भवात्, व्याधीनामप्यधिष्ठात्री-देवताः सन्ति तत्रापि तां विषूचिकां च स्तुवन्त्यत्वयं, श्येनपत्राभ्यां यजमानस्य पावने विनियोगः । या व्याघ्रमित्यस्य ऋचेन पूर्तिः, स्यमं पातु, सिंहन इतिद्वे ऋचौ ॥

यद्वा पिपेषाग्नेयी बृहती ॥

यद्वा पिपेषेत्येषाऽग्निदेवत्या बृहती । अग्निप्रेषणे विनियुक्ता । अत्र तृतीयएकादशकः । षष्ठोऽष्टकः एकोनः ॥

सम्पृचस्थ पयोग्रहाः ॥

सम्पृचस्थेत्यस्य यजुषः पयोग्रहा देवताः । यजुस्त्रिष्टुप् । पयोग्रह-संसर्गने विनियोगः ॥

विपृचस्थ सुराग्रहाः ॥

विपृचस्थेत्यस्य सुराग्रहा देवता । यजुस्त्रिष्टुप् । सुराग्रहसंसर्ग-नै विनियोगः ॥

देवा यज्ञं ब्राह्मणानुवाको विंशतिरनुष्टुभः सोमसम्पत् ॥

देवा यज्ञमतन्वतेत्याद्या विंशतिरृचोऽनुष्टुप्छन्दस्काः । ब्राह्मणा-नुवाकः । अयं विंशतिकण्डिकात्मको ब्राह्मणरूपोऽनुवाको न तु मं-

अथ नवर्चे पावमाने प्रथमो पुनन्तु मा इत्येते अनुष्टुभौ पितृदे-वत्ये। पाद्यायाः प्रथमो ऽष्टकः। तेन दृष्यधिका वा॥

प्रजापतिस्तृतीयां वैखानसमाग्नेयीं गायत्रीम् ॥

अग्न आयूंषि पवस इतीमां तृतीयां गायत्रीमग्निदेवतां वैखानसः प्रजापतिर्ऋषिरपश्यत्॥

चतुर्थी लिङ्गोक्तदेवतानुष्टुप् ॥ (१)

पुनन्तु मा देवजना इत्येषा चतुर्थी लिङ्गोक्तदेवतानुष्टुप्छन्दस्का। देवजना धियो, विश्वा भूतानि जातवेदश्चाप्यायिङ्गोक्ता देवता॥

पञ्चम्याग्नेयी गायत्री ॥

पवित्रेण पुनीहि मेत्येषा गायत्री अग्निदेवता च। ऋचीय। व्यूहः॥

षष्ठ्याग्नेयी ब्राह्मी वा गायत्री ॥(२)

यत्ते पवित्रमित्येषा षष्ठी गायत्री अग्निदेवत्या ब्रह्मदेवत्या वा॥

ब्राह्मस्तृतीयः पादः ॥

यत्तदित्यस्यास्तृतीयः पादएषा, ब्रह्म तेनेयं ब्राह्मी। ब्रह्मदैवतः॥

सौमी सप्तमी ॥

पवमानः सदित्येषा सप्तमी ऋक् गायत्री सोमदेवता च गायत्री-त्यनुवर्त्तते॥

सावित्र्यष्टमी ॥

गायत्रीत्यनुवर्त्तते। उभाभ्यामित्येषा अष्टमी गायत्री सवितृदेव-त्या च। मां पुनीहीति सप्तकः। तत्र व्यूहो वा॥

नवमी विश्ववैश्वदेवी ॥

---

(१) दैवतमनुष्टुप्। इति काण्वसर्वानुक्रमपाठः॥

(२) ब्राह्मी च गायत्री इति काण्वसर्वानुक्रमपाठोऽत्र बोध्यः॥

दृष्टेरित्युक्तत्वात्, इयं च मध्ये ज्योतिर्जगतीत्युच्यते, अस्य जगत्या एकपादोऽष्टकः । सा ज्योतिष्मती । तथा चोक्तं । पिङ्गले । एकेन त्रिष्टुब्ज्योतिष्मती । तथा जगती । पुरस्ताज्ज्योतिः प्रथमेन । मध्येज्योतिर्मध्येनोपरिष्टाज्ज्योतिरन्त्येनेति । सरस्वतीत्यन्त्या अन्त्यौ दशकैकादशकौ । तथाऽपि जगती द्वौ तु जागतौ यस्याः सा जागता जगतीत्युक्तत्वात् । पयसा शुक्रमित्यस्यां त्रयएकादशकाः । चतुर्थो दशकः । तत्र तृतीये एको व्यूहः । चतुर्थे द्वौ व्यूहौ । एवं द्वौ द्वादशकौ । चतुर्थस्तु स्वत एव द्वादशकः । एवं द्वौ द्वादशकौ तेनेयमपि जगती । आन्त्राणीत्यत्र चत्वारोऽप्येकादशकाः । चतुष्कमऽपि सा जगत्येव । इत्यहं शहत्युक्तत्वात् । "जगतीभिर्जुहोतीतिश्रुतेश्च" । कुम्भोवनिष्टुरित्यत्र आद्यएकादशका चतुर्दशकः । तथाऽपि जगत्येव बहुनाऽपि । मुख सदित्यत्र द्वितीया द्वादशका । अथ एकादशकाः । तथापि जगती पश्चिमा चतुरित्यत्रापि तृतीया द्वादशका । त्रयएकादशकाः अविर्नैत्यत्राद्यो दशकः, द्वितीयात्यावेकादशकौ । तृतीयो नवकः, इन्द्रस्यरूपमित्यत्र चतुर्थो द्वादशकः । त्रय एकादशकाः । आकम्नुपस्थ इत्यत्र तृतीयो द्वादशकः । अन्ये एकादशकाः, अङ्गान्यात्मन्नित्यत्र द्वितीयो द्वादशकः । प्रथमो व्यूहेन तथा । अन्त्यावेकादशकौ । सरस्वती योन्यामित्यत्राद्यो दशकः । त्रयएकादशकाः । तेन पशूनामित्यत्र प्रथमएकादशकः । त्रयो द्वादशकाः । अत्र "जगतीभिर्जुहोति षोडशभिर्ऋग्भिर्जुहोतीति" श्रुतिबलाद्व्यूहैरक्षरैरप्यूनाना जगतीत्वमेव । न छन्दोऽन्तरत्वम् ॥ २५ ॥

अश्वस्य योनिर्द्विपदा गायत्र्यासन्दीदेवताका ॥ (१)

अश्वस्य योनिरित्येतद् द्विपदा गायत्री । आसन्दी देवता यस्याः सा आसन्दीदेवता । "शेषाद्विभाषेति कप् ।" वेद्यामध्ये आसन्द्या-

(१) पादित्यत्र नास्तीदं काण्वसर्वानुक्रमपाठ ॥

निधानेऽस्या विनियोग ॥

मा त्वा कृष्णाजिनम् ॥

मा त्वेत्यस्य यजुष. कृष्णाजिनं देवता । कृष्णाजिनस्यासन्द्यामास्तरणे विनियोग । प्राजापत्या गायत्री ॥

स्त्योकृत्यौ ॥

मृत्यो पाहि विद्योत्पाहीत्यनयोर्द्वयोर्यजुषो रुक्मौ देवते पादयोरुक्मोपासने उभयोर्विनियोग । दैव्यौ बृहत्यौ निवृतादेतत्तु प्रागुक्तम् ॥

अश्विनोर्भैषज्येन लिङ्गोक्तदेवतानि त्रीणि ॥

अश्विनोर्भैषज्येनेत्यादीनि त्रीणि लिङ्गोक्तदेवतानि । वसापयःसप्तैर्यजमानाभिषेके विनियुक्तानि । अश्विनो. प्राजापत्या बृहती सरस्वत्यै स्वराड्गायत्री । इन्द्रस्य स्वराड्गायत्री ॥

कोऽसि प्राजापत्या गायत्री ॥

कोऽसि कतमोऽसीत्येषा प्रजापतिदेवता गायत्रीछन्दस्का । यजमानालम्भने विनियुक्ता । अष्टको व्यूहेन सप्ताक्षर. । द्वितीय षडक्षर । तृतीय एकादशक । तेनेयमुष्णिग्गर्भा गायत्रीत्युच्यते । "षट्सप्तैकादशोष्णिग्गर्भेत्युक्ते" ॥

शिरो मे पञ्चर्चमिन्द्रशरीरावयवदेवताकम् ॥

इन्द्रस्य शरीरावयवा देवता यस्य तदिदं शरीरावयवदेवताकं । तृतीया गायत्री । अत्र पञ्चर्चे तृतीया बाहू मे बलमित्येषा गायत्रीछन्दस्का । अत्र द्वितीया सप्तक । अन्या महापङ्क्तिश्छन्दसा । अत्र प्रथमे नाभिर्मे चित्तमित्येषा अन्या महापङ्क्ति । अष्टाक्षराणि षड्युक्ता च । अष्टाक्षरा । षट्पदा सन्ति तेनेयं महापङ्क्ति "षडष्टका वा महापङ्क्तिरित्युक्ते" पायुर्मे । भग, सौभाग्यं । अनयो

व्यूहः। अनुष्टुभोऽन्याः, अत्र पञ्चर्चं अन्याः शिरो मे, जिह्वा मे, पृष्ठीर्मे, इत्येता अनुष्टुभः। अस्य पञ्चर्चस्य यजमानकर्तृके यथालिङ्गं विभज्य विभज्याङ्गसंमर्शने विनियोगः॥

प्रतिक्षत्रे वैश्वदेवम्॥

प्रतिक्षत्र इत्येतद्यजुर्विश्वेदेवता। यजमानस्यासन्दीतः कृष्णाजिनेऽवरोहणे विनियुक्तं। अष्टापञ्चाशदक्षराणि। द्वौ व्यूहौ। तेनातिशक्वरीछन्दः॥

त्रया देवा दैवी पङ्क्तिस्त्र्यवसाना॥

त्रया देवा इत्येषऋक् दैवी देवत्या पङ्क्तिः त्र्यवसानयुक्ता च। द्वेष्य सवितुः व्यूहः। अष्टकाः पञ्चपदाः। तेन चत्वारिंशदक्षरा पङ्क्तिः। नवर्क्षिंशस्य मशकस्य वसाग्रहस्य होमे विनियोगः॥

प्रथमा द्वितीये वैश्वदेवमाशीर्लिङ्गम्॥

प्रथमाद्वितीयैरित्येतद्यजुर्विश्वदेवदेवतमाशीर्लिङ्गं आशिषां लिङ्गानि यस्मिन् तदाशीर्लिङ्गं पूर्वोक्तस्य ग्रहस्य होमे विनियुक्तं। अत्र षडशीतिरक्षराणि एको व्यूहः। तेन प्रकृतिश्छन्दः, त्रया देवा इत्यादीनां सप्तदशानां पादानां ग्रहमध्ये निविद्रूपे प्रसवे विनियोगः॥

लोमान्यनुष्टुब्लिङ्गोक्तदेवता॥

लोमानि प्रयतिरित्येषा लिङ्गोक्ता देवता अनुष्टुप्। अत्र तृतीयः सप्तकश्चतुर्थो नवकः। लोमत्वङ्मांसमस्थिमज्जानोऽत्र लिङ्गोक्ता देवता. यजमानस्य यथाङ्गमर्शने विनियोगः॥ ३६॥

यद्देवास्तिस्रोऽग्निवायुसूर्यदेवत्या अनुष्टुभः कूष्माण्डी॥

यद्देवा, यदि दिवा, यदि जाग्रदित्येतास्तिस्र ऋचः क्रमेणाग्निवायुसूर्यदेवत्या अनुष्टुभः। कूष्माण्डीसंज्ञकाश्च। मासरकुम्भप्लावने वि-

नियुक्ता', विश्वान्सुवस्तु ब्रह्मेति व्यूहः ॥

## यद्ग्रामे लिङ्गोक्तदेवतम् ॥

यद्ग्रामे इत्येतस्य सूक्तस्याद्ययजुरासीत्यत्र लिङ्गोक्तदेवतं । मासर कुम्भस्थापनएव विनियुक्त । एकाधिका आर्षी त्रिष्टुप् । यच्चाद्योऽयमन्त्या- तृतीयं वारुणी गायत्र्यवसाना प्रथमं व्यूहः । मासरकुम्भस्थापनएव विनियोग ॥

अवभृथेति यज्ञदेवतम् ॥

द्वौ व्यूहौ । याज्ञीयानुष्टुप मासरकुंभमार्जने विनियोगः ॥

## समुद्रे ते द्विपदा विराडापो ॥

समुद्रे ते इतीयं विराट्द्विपदा आपः अस्या देवता । मासरकुम्भ- मार्जने एव विनियुक्ता । दशाक्षरौ द्वौ पादौ । "दशाक्षराद्विविराडिति श्रुतेः" अतएव विनियुक्ता ॥

## द्रुपदादिवानुष्टुबापो ॥

द्रुपदादिवेतीयमनुष्टुप्छन्दस्का आपोदेवता । आद्यो देवकः, तेन- द्व्यधिका । स्नानोपासने विनियोग ॥

## उद्वयं सौर्यनुष्टुप्प्रस्कण्वस्य ॥

उद्वयमित्येषा सूर्यदेवत्याऽनुष्टुप्प्रस्कण्वस्यार्षं प्रस्कण्वोऽस्या ऋ- षिरित्यर्थः जलादुत्तारणे विनियोग, द्वितीययोश्च ॥

## अपोऽअद्याग्नेयी पङ्क्तिः ॥(१)

अपोऽअद्यान्वचारिषमितीयमग्निदेवत्या पङ्क्तिछन्दस्का पञ्चपदा चत्वारिंशदक्षरा पङ्क्तिः । आहवनीयोपस्थाने विनियोग ॥

## एधोऽसि समिद्देवत्ये यजुषी ॥

एधोऽसि, समिदसीत्येते यजुषी समिद्देवत्ये । एधोऽसीत्यस्य देव-

(१) ऋक् ची पङ्क्तिरिति काण्वसर्वानुक्रमणात् ॥

जगती समिदादाने विनियोगः । समिदसीत्यस्य समिदाधाने विनियोगः । व्यूहेन सामोष्णिक् ॥

समाववर्त्थ निरुक्ता गायत्री ॥

समाववर्त्तीत्येषा अनिरुक्ता गायत्रीछन्दस्का । आज्याहुतिहोमे विनियुक्ता । अग्निदेवत्येति काण्वसंहिताभाष्ये ॥

वैश्वानरज्योतिर्यजुः ॥

वैश्वानरज्योतिरितीदं यजुः, तत्र यस्य वैश्वानरो देवतेति खरभाष्ये त्वगायत्री । पूर्वसूत्रोक्तहोमएव विनियोगः ॥

अभ्यादधाम्याग्नेयमानुष्टुभं त्वमसाश्वतराश्विः ॥

अभ्यादधामि समिधमित्येतदृचमनुष्टुप्छन्दस्कमग्निदेवत्यमाश्वतराश्विर्ऋषिरपश्यत् । क्रमेण समित्त्रयाधाने विनियोगः । यत्र इन्द्रेति व्यूहः ॥

अꣳशुनासौर्यनुष्टुप् ॥

अꣳशुना तइत्येषा सौरी सूर्यदेवत्याऽनुष्टुप् । सुरासंसर्जने विनियुक्ता । आद्यः षट्कः । नेम दृव्यूना ॥

सिञ्चन्ति परि सौर्यैन्द्री वाऽनुष्टुप् ॥

सिञ्चन्ति परिषिञ्चन्तीत्येषा सौरी । ऐन्द्री वा । सूर्य इन्द्रो वा अस्य देवतेत्यर्थः । अनुष्टुप्छन्दः । पूतायाः सुरायाः आदाने विनियोगः । अश्वात्ययोर्व्यूहः ॥

धानावन्तमैन्द्री गायत्री विश्वामित्रस्य ॥

धानावन्तमित्येषा इन्द्रदेवत्या गायत्रीछन्दस्का । विश्वामित्रस्यार्षे अस्या विश्वामित्रऋषिः । अवभृथकर्माणि धानाहोमे विनियोगः ॥

बृहदिन्द्राय बृहतीनृमेधपुरुमेधयोरव्यर्यौ गायत्री ॥

विनियुक्ते । अनयोरार्षादिकं प्रागुक्तमेव । युवमनुष्टुप्पूर्वमिव, त्रिष्टुब-श्विसरस्वतीन्द्रदैवत्ये इति । तेन पुनरुक्तमिदं तत्सूत्रं इति केचित्-पठन्त्येव । तत्साधकं इन्द्रकर्म । इन्द्रावसुः । यथुरासं । एषु व्यूहः ॥

यस्मिन्नश्वासऽआग्नेय्यौ जगती त्रिष्टुभौ ॥

यस्मिन्नश्वासोऽग्नावग्नइतीमे द्वे ऋचौ अग्निदेवते । यथा क्रमं जगतीत्रिष्टुप्छन्दस्के । पशुष्विष्टसतीयाज्यापुरोनुवाक्यात्वेन विनियु-क्ते । यस्मिन्नश्वास इति याज्या । अग्नावग्ने त्रिष्टुप्पुरोनुवाक्या, अग्ना-व्यग्ने इत्यस्याप्यत्र व्यूहः ॥

अश्विना तेजसैकादशर्चं० गायत्रम् ॥

अश्विना तेजसेत्याद्यमेकादशर्चं गायत्रम् ॥

गोमदूगृत्समदस्तृचमाश्विनं गायत्रम् ॥

गोमदूषु नासत्येति तृचमश्विदेवत्यं गायत्रछन्दस्कं । गोमदिति अयः सप्तकाः, तेन पादनिवृदित्युक्तिः । "क्वचित्त्रिपादूर्ध्वाभिः, सा पादनि-वृदिति पिङ्गलोक्तेः" । व्यूहेन वा यथार्थं पूरणं कार्यं, अश्वावति-यो व्यूहः ॥

पावकानो मधुच्छन्दाः सारस्वतम् ॥

तृच गायत्रमिति चानुवर्तते । पावका नः सरस्वतीत्येतत्तृचं सरस्वतीदेवतं गायत्रछन्दस्कं मधुच्छन्दा ऋषिरपश्यत् । चेतन्तीति सप्तकः । तेनैकोना ॥

इन्द्रायाह्यैन्द्रं मधुच्छन्दा एव ॥

तृच गायत्रमिति चानुवर्तते । इन्द्रायाहि चित्रभानो इत्यादिकं तृचं इन्द्रदेवतं गायत्रछन्दस्कं मधुच्छन्दा एवापश्यत् । या इमे व्यूहः ॥

अनुक्तमानुष्टुभमश्विसरस्वतीन्द्रदैवत्यम् ॥

यदा चानुक्तमनुक्तदैवतमनुक्तछन्दस्कं च मन्त्रजातं तदानुष्टुभमनुष्टु-

सुनावं नौः स्वर्ग्या गायत्री ॥

सुनावमित्यस्याः स्वर्ग्या स्वर्गसम्बन्धिनी नौर्देवता। गायत्रीछन्दः। नावाऽभ्यर्थोर्थः। नावा मारोहणे विनियोगः॥

आ नो मैत्रावरुणीं गायत्रीं विश्वामित्रः ॥

आ नो मित्रावरुणेतीमां मित्रावरुणदेवत्यां गायत्रीछन्दस्कां विश्वामित्रोऽपश्यत्। पयस्या याज्ये पुरोऽनुवाक्या। आद्यः साम-स्त्रैकोना निवृत्॥

प्रबाहवा वसिष्ठस्त्रिष्टुप् ॥

मैत्रावरुणीमित्यनुवर्तते प्रबाहवेत्येतां त्रिष्टुभं मित्रावरुणदेवत्यां वसिष्ठोऽपश्यत् पयस्या याज्ये याज्येयं। अं नो भवन्तु वाजिन इति वाजियागे याज्यानुवाक्ये। तयोरङ्ग्यादिनाग्रतम्॥

समिद्धोऽग्निरेकादशाप्रमानुष्टुभमेवं स्वस्त्यात्रेयस्यार्षं वयोधाइन्द्रोदेवता ॥(१)

समिद्धोऽग्निः समिधित्येतदेकादशर्चमाप्रं आप्रीसम्बन्धि अनुष्टुप्छन्दस्कं स्वस्त्यात्रेयस्यार्षं। स्वस्त्यात्रेयस्त्वृषिरस्येत्यर्थः। इन्द्रो वयोधाः यस्य देवता। वयोधसे यशो ममाजानां याज्या एताः यथैवमुक्तं। तथाप्येव इध्मस्तनूनपादित्यादयएवाप्रीयं देवताः। ऐन्द्रमध्ये तथैवोक्तत्वात्। वयोधाइन्द्रोदेवतेत्ययं तु प्रमादपाठ इव दृश्यते। अन्यदेवतानिर्देशैरसङ्गतत्वात्। अत्र सुसमिद्धः। मधुर्गीः। इळाभिः। सोमो। स्तीर्णे बर्हिः। विश्वेदेवाः। स्वाहा यज्ञं। एतेषु व्यूहः। पङ्क्तिछन्दा सप्तमः। बृहद्गर्भो दशमः। एकाधिकत्वाद्भुरिक्॥

---

(१) अत्र सूत्रे स्वस्त्यात्रेयपदादग्रे स्वस्त्यात्रेयस्यार्षं वयोधा इन्द्रो देवता। एतत्सर्वान्तं कण्वसर्वानुक्रमे नास्ति छन्दोऽनन्तरं देवतमित्याधिक पदमस्तीति बोध्यम्॥

अग्निनौ छागस्य हविषः । अत्र चतुर्दशाधिकं शतमक्षराणि । सरस्वती मेषस्य, अत्र सप्तदशाधिकं शतमक्षराणि । इन्द्रमृषभस्य । अत्र चतुर्दशाधिकं शतमक्षराणि ॥

वनस्पतिमभियूपः ॥

होता यक्षद्वनस्पतिमभीत्यस्य यूपो देवता वनस्पतिनामा यूपोऽयं । वनस्पतिमभि । अत्र द्वाभ्यामधिकं शतद्वयमक्षराणि ॥

अग्निर् स्विष्टकृतए स्विष्टकृदग्निः ॥

होता यक्षदग्निं स्विष्टकृतमित्यस्य स्विष्टकृदग्निर्देवता । अत्र सप्तसप्तत्यधिकं शतमक्षराणि । स्विष्टकृद्यागेऽयं याज्य । एतेषामग्निनौ छागस्येत्यादीनां स्विष्टकृदन्तयाज्यानां छन्दो नास्ति, अक्षरानत्परिमाणस्य छन्दसोऽभावात् । तदुक्तं यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यत इति ॥

देवं बर्हिरेकादशानुयाजप्रैषा अग्निसरस्वतीन्द्रदेवत्याः ॥

देवंबर्हिः सरस्वतीत्याद्याः एकादशानुयाजप्रैषाः अग्निसरस्वतीन्द्रदेवत्याः । अथापिनाकृत्य एव, बर्हिर्द्वारादयोदेवता नाराशंस इति हरिस्वामिनः । देवं बर्हिः । आर्षीत्रिष्टुप् । देवीर्द्वारः । द्वौ व्यूहौ । आर्षीत्रिष्टुप् । देवी उषासा आर्षीत्रिष्टुप् । देवीजोष्ट्री । अतिजगती । देवा देवानां । एकाधिका अतिजगती । देवीस्तिस्र । आर्षीत्रिष्टुप् । देवइन्द्रः । द्वौ व्यूहौ अतिशक्करी । देवो देवै । व्यूहः । अत्यष्टिः । देवं बर्हिः । अतिशक्करी । देवोऽग्निः अत्रैकादशाधिकं शतमक्षराणि अन्त तेन छन्दो नास्ति ॥

अग्निमद्य इत्ययाजप्रैषो लिङ्गोक्तदेवतो लिङ्गोक्तदेवतः ॥

अग्निमद्यहोतारमित्ययं सूक्तवाक्यः मैत्रो त्रिष्टोमाग्निसरक्त्वादिदेवताः, अग्निमद्यपंक्तिः । सूक्ताः । धृतिः । त्वामद्य । एकाधिकाकृतिः । अनियताक्षरो वाऽयं समस्तः प्रैष । तेन छन्दसोऽभावः । अनियताक्षरत्वात् । हिरण्याक्षोऽध्यायसमाप्तिज्ञापनार्थः ॥ ४०॥

इतिथिरन्विचितसम्राट्‌प्रपतिविंशत्कतुकलामहायाज्ञिकश्रीश्रीप्रजापतिसुतेन याज्ञिकश्रीदेवकर्तं सर्वानुक्रमविकाव्याख्याने द्वितीयोऽध्यायः समाप्तः ॥

## अथाश्वमेधः

अथानन्तरमश्वमेधः अभिधीयतइति शेष ॥

## चतुरोऽध्यायान्प्रजापतिरपश्यत् ॥

तेजोऽसि शोचर्पनिष्कं । तेजोऽसि शुक्रमित्यस्य सौवर्ण निष्कदैवत । वाचने विनियोग । प्राजापत्याऽनुष्टुप । देवस्य त्वेत्यस्य साम्नजगतीछन्द । सूक्त । ग्रामादाने विनियोग. ॥

## इमामगृभ्णंस्त्संवत्सरो यज्ञपुरुषस्त्रिष्टुभम् ॥

इमामगृभ्णन्निति मामृच त्रिष्टुभं संवत्सरो यज्ञपुरुषऋषिरपश्यत् रशनादैवत्येयमितिकण्वभाष्ये । अत्र त्वतीयो रशनः । अभिधा अशीत्यस्यार्षीत्रिष्टुपछन्द अभिधा, त्रिष्टोमाग्नि । अश्वबन्धने विनियोग । अश्वाश्वो देवता । अश्वस्य वंभस्याभीत्यस्य-प्राजापत्याबृहती । अश्वोदेवता । अश्वाभमन्त्रणे विनियोग । अश्वपाश ।। व्यूहेन त्रयागायत्री अध्वर्युर्देवता । अश्वबन्धने विनियोग । प्रजापतये । यजुस्त्रिष्टुप् । प्रजापतिर्देवता । इन्द्राग्निभ्यां ।, यजुःपङ्क्ति । इन्द्राग्नोदेवता । वायवे त्वा । यजुर्बृहती ।, वायुर्देवता । विश्वेभ्यस्त्वा । सर्वेभ्यस्त्वा यजुर्जगत्यौ । विश्वेदेवा देवता सर्वे देवादेवता ।. क्रमेण ।, प्राजापतये त्वेत्यादीना, प्रोक्षणे विनियोगः । अथवा एषां,

आद्यां मेधातिथिः ॥

आद्यामग्न्यचं याया हिरण्यपाणिरित्येतां मेधातिथिऋषिरपश्यत् ॥

अग्निरस्तोमेनाग्नेयं तृचं गायत्रं० सुतम्भरो विश्वामित्रो विरूपो यथासङ्ख्यम् ॥

अग्निं स्तोमेनेत्यादिकं तृचमग्निदेवतं गायत्रीछन्दस्कं । अस्य तृचस्य यथासंख्यं सुतम्भरो विश्वामित्रो विरूप इत्येते त्रय ऋषयः । तत्राग्निं स्तोमेनेतीमां सुतम्भरऋषिरपश्यत् । अग्निं दूतमितीमां विरूपोऽपश्यदिति यथासङ्ख्यमव्दार्थं ॥

अजीजनो हि पवमानी कृतिं पिपीलिकमध्यामनुष्टुभं व्यश्वत्रसदस्यू ॥

अजीजनो हि पवमानेतीमामृचं पावमानीमनुष्टुभं पिपीलिकमध्याकृत्यनुष्टुप्छन्दस्कां व्यश्वत्रसदस्यू ऋषी अपश्यतां यस्याः प्रथमतृतीयौ पादौ द्वादशकौ द्वितीयोऽष्टक सा पिपीलिकमध्याकृतिरनुष्टुप् । "मध्ये ज्यायसाऽष्टकाश्च कृतिर्मध्ये चेदष्टकः । पिपीलिकमध्येति वचनात्" । अत्र पूर्वसूत्रात्कृतिपदानुवृत्तेरस्यामनुष्टुभि पिपीलिकमध्याकृतिरित्येषा सम्पन्ना । पावयति पवित्रीकरोतीति पावमानी तया ॥

विभूरश्वदैवतम् ॥

विभूर्मात्रा इत्येतदश्वदैवतं । अश्वस्य दक्षिणे कर्णे जपे विनियोगः । अतिजगतीछन्दः ॥

देवा दैवम् ॥

देवा भागपाला इत्येतद्दैवं । देवदैवतं दक्षिणामादेशे विनियुक्तं । ऋगुष्णिक ॥

इहरन्ति राजन्यानि चत्वारि ॥

इह रन्तीत्यादीनि चत्वारि यजूंष्यग्निदेवत्यानि । धृतिहोमे वि-नियुक्तानि । प्रथमे इह रन्तिः स्वाहा । यजुर्गायत्री । इह रमतां स्वा-हा यजुरुष्णिक् । इह धृतिः स्वाहा । यजुर्गायत्री, इह स्वधृतिः स्वा-हा । यजुरुष्णिक् ॥

कायौदग्रभणानि लिङ्गोक्तानि ॥

काय स्वाहेत्यादीन्यौदग्रभणमन्त्राणि लिङ्गोक्तदेवतानि औदग्रभ-णहोमे विनियुक्तानि । छन्दांसि तु प्रागुक्तानि ॥

आब्रह्मँल्लिङ्गोक्तान्यध्यायात् ॥

आब्रह्मन्नित्यादीन्यध्यायपर्यन्तानि लिङ्गोक्तदेवतान्येव । आब्र-ह्मन्नित्यस्य जपे विनियोगः । सप्तषष्ट्यधिक शतमक्षराणि तेन द्व्य-धिका उत्कृतिः । प्राणाय स्वाहेत्यादीनां सर्वहोमे एवां छन्दां-सि प्रागुक्तप्रकारेण कल्पनीयानि ॥ १ ॥

प्रजापतये प्राजापत्यम् ॥

प्रजापतये त्वा जुष्टमित्येतत्प्रजापतिदेवतं । एकाधिकाऽऽर्षीगायत्री । हिरण्यगर्भ इत्यस्य ऋष्यादिकं प्रागुक्तम् । महिम्नो ग्रहणे तस्य विनियोगोऽस्य च । एष ते इत्यस्य । यजुस्त्रिष्टुप् । सादने विनि-योगः ॥

यस्ते दैवम् ॥

यस्ते हंसंवत्सर इत्येतद्दैवं । देवदेवतं । होमे विनियुक्तं द्व्यधिका शक्वरी । व्यूहाभ्यां अतिशक्वरी वा ॥

यः प्राणतस्त्रिष्टुप्कायी हिरण्यगर्भः ॥

यः प्राणतो निमिषत इतीयं त्रिष्टुप्छन्दस्का कायी । कोदेवता यस्याः सा कायी । हिरण्यगर्भस्य ऋषेः आर्षं । हिरण्यगर्भोऽस्या ऋषिरि-त्यर्थः । तृतीया द्वादशकः । उत्तरस्य महिम्नो ग्रहणेऽस्या विनियो

ग'। अत्रापि प्रजापतये प्राजापत्य। सोपयामस्य एकाधिका चतु-ष्गायत्रीछन्द। एष तद्दति यजुर्जगती, यस्ते राजो द्व्यधिकामतिज-गती वा। व्यूहाभ्यामष्टिर्वा॥

युञ्जन्ति मधुच्छन्दा आदित्यदेवत्यां गायत्रीम्॥

युञ्जन्ति ब्रध्नमित्येतामादित्यदेवतां गायत्रीं मधुच्छन्दा ऋषिरप-श्यत्। अश्वयोजने विनियोगोऽस्याः॥

युञ्जन्त्यस्याश्वस्तुति.॥

युञ्जन्त्यस्य काम्येत्येषाश्वस्तुतिः। इयमपि गायत्री आद्यः पादः षट्कः। तत्र व्यूहो। पूर्वसूत्राद्गायत्रीत्यनुवर्त्तते। इतराश्वयोजने विनियोगोऽस्याः॥

यद्वातो बृहती॥

अश्वस्तुतिरिति वर्तते। यद्वातो अपो इत्येषा बृहतीछन्दः। व्यू-हेन छन्दः पूरण, वाचनेऽस्या विनियोग॥

वसवस्त्वा लिङ्गोक्तानि॥

वसवस्त्वाञ्जन्त्वित्यादीनि लिङ्गोक्तदेवतानि। अश्वस्याञ्जने विनि-युक्तानि। वसवस्त्वाद्यासुर्यनुष्टुप्, रुद्रास्त्वा यजुस्त्रिष्टुप्। आदित्या-स्त्वा। आसुर्यनुष्टुप्,। अश्वस्य केशपुच्छेषु शिरोग्रीवापुच्छरोमसु क्रमेण पत्नीभिः सौवर्णमणिप्रवयणे विनियोगः॥

लाजी३नश्वदेवत्याम्॥

लाजी३ञ्छाची३नित्येतदश्वदेवतं, व्यूह, भरद्बृहती वा अश्वाय रा-त्रिहुतशेषसमर्पणे विनियोग॥

कः स्विदन्ततोऽनुष्टुभः प्रश्नप्रतिप्रश्नभूता ब्रह्मोद्ये हो-तुर्ब्रह्मणश्च॥

ब्रह्मोद्यसञ्ज्ञे हि कर्मणि होतुर्ब्रह्मणश्च प्रश्नप्रतिप्रश्नभूताः।

किंस्विदावपनं, द्यौरासीदित्यनयोर्व्यूहः ॥

वायुष्ट्वा लिङ्गोक्तानि ॥

वायुष्ट्वेत्यादीनि लिङ्गोक्तानि । अग्न्यादिदेवतानीत्यर्थः । वायुरादिर्देवतानि वा । वायुष्ट्वा व्यूहेन ककुप्कृतौ । एष स्य राथ्य आसुरी गायत्री । वृष्णा ताभ्यां प्राजापत्या गायत्री । नमोऽग्नये दैवी बृहती महावीराणि एषां विनियोगः ॥

सꣳशितस्तिस्रोऽश्वदेवत्या अनुष्टुब्विराड्त्रिष्टुभः ॥

सꣳशितो रश्मिनेत्याद्यास्तिस्रोऽनुष्टुभोऽश्वदेवत्या, यथाक्रममनुष्टुब्विराड्त्रिष्टुभो भवन्ति । अश्वस्यैवाश्वाध्वर्युणा विनियुक्ताः । अश्व अधस्थाः इति व्यूहः । सꣳशितो रश्मिनेति अनुष्टुप् । स्वग वाजिभिरिति विराट् । दशकास्त्वधा विराडिति तत्रास्मात्पायुक्तत्वात् । न वा इति त्रिष्टुप् । अ वाद्यतो यो द्वादशको तेन त्र्यधिका ॥

अग्नि पशुरासीत्त्रीणि ॥

अग्नि पशुरित्यादीनि त्रीणि यजूंष्यग्न्यादिदेवत्यानि । अश्वोपवहने विनियुक्तानि । आर्षीपङ्क्तिः, प्राजापत्येत्यादीनामनुक्त । एष सप्तमी पदिपद्यध्यायोर्हीमानन्तरमाज्याहुतिमयहोमे विनियोगः ॥

अर्ध्वोऽनुष्टुबश्वस्तुतिः ॥

अर्ध्वो ऽश्विधि इत्यनुष्टुप्छन्दस्का अश्वस्तुतिः । आत एवास्या । श्ववि दैवतः । अप व्यूहः । पत्नीना यावने विनियोगः ॥

गणानां त्वा चत्वारि लिङ्गोक्तानि ॥

गणानां त्वा गणपतिमित्यादीनि चत्वारि यजूंषि लिङ्गोक्तदेवतानि प्रथमं प्राजापत्यानुष्टुप् । गणानामपि । वसो ममेति त्रयाणामपि शेषो ज्ञेय । पत्नीनामश्वपरिगमनेषु विनियोगः क्रमेण । आहमजानि प्रभ्यासा पङ्क्तिः । अम्बिकेयादयस्मापि गयने विनियोगः । स्वर्गे लोके

सीत् । द्यौरासीत् । काईमरे, अजारे इत्येतायमस्त्रयानुष्टुभः । अ-
न्त्यावत्तमस्त्वष्टकव्यतिरिक्ता दश ऋचोऽनुष्टुभ । ताय, पृच्छामि त्वा
चितये । अपि तेषु । केष्वन्त , पञ्चस्वन्त , कत्यस्य । कदस्य । कोऽस्य-
स्य । वेदाहं । पृच्छामि त्वा, इयं वेदिरित्येता । अथ किम्स्वावपनं,
येषु विष्णुः । अपि तेषु । केष्वन्तः । कान्यन्त । एतेषु व्यूहः । किं स्वि-
त् । द्वौ व्यूहौ । तान्यन्त । न मा यया । अजारे । कत्यस्य । को अस्-
या, कः सूर्यस्य हारगत । को वेद इमकः । पृच्छामि वाप. । अयं
यज्ञ । ब्रह्माऽव । एतेषु व्यूह ॥

### सुभूरनुष्टुब्लिङ्गोक्तदेवता ॥

सुभूः स्वयम्भूरित्येतामनुष्टुभमाल्लिङ्गोक्तदेवता । पूर्वस्य महिम्न पुरोऽनुवाक्या । उत्तरमहिम्नः याज्या । च । द्वितीये व्यूह , लिङ्गानोऽपि प्रजापतिर्देवता ॥

### होता यक्षत्प्राजापत्यः प्रैषः ॥

होता यक्षत्प्रजापतिमित्ययं प्रजापतिदैवत्य,महिम्न प्रैष । दृष्यधिका आर्षीगायत्री । व्यूहेन ककुब्बृहती वा ॥

### प्रजापते हिरण्यगर्भः प्राजापत्यां त्रिष्टुभम् ॥

प्रजापते न त्वदितीमास्य प्रजापतिदेवतां त्रिष्टुभं हिरण्यगर्भ ऋषिरपश्यत् । इय पूर्वस्य महिम्ना याज्या । उत्तरस्य पुरोऽनुवाक्या च । अथायाच्येऽपि व्यूह ॥ ३ ॥

### अम्बस्तूपरद्रूत्याद्यः पशवोऽध्यायेनोक्ता देवता वा पर्यङ्ग्या ॥

अम्बस्तूपर इत्यनेनाध्यायेनाम्बस्तूपरादय पञ्चदशपर्यायाः पर्यंग्य सञ्ज्ञा पशव उक्ता देवता वा । वा चार्थे,तेषामम्बादीनां पर्यङ्ग्या या देवतास्ता ज्ञापयन्त्यादयञ्चा । अम्बाद्य पञ्चदशपशव प

जुंहकाय स्वाहेत्येषा द्विपदान्तर्जले उदकमध्ये जपः सती अघनाशनी पापनाशनी । तथा च हारीतः । जुम्बका नाम गायत्री वेदे वाजसनेयके, अन्तर्जले मज्जनात् ब्रह्महत्यां व्यपोहतीति । हिरण्यगर्भो, य आत्मद इत्यनयोरार्षादि प्रागुक्तं । अतः प्रभृति प्राजापत्यपशूनामग्न्यादीनामेता याज्यानुवाक्या इति संहिताभाष्ये ॥

यस्येमे काण्व्यौ त्रिष्टुभौ हिरण्यगर्भः प्राजापत्यऋषिरपश्यत् ॥

यस्येमे । यस्येमा, यस्य छाया, एतेषु व्यूह ॥

आ नो दशर्चं जागतं वैश्वदेवं गोतमः ॥

आ नो भद्रा इत्यादि दशर्चं जगतीछन्दस्कं विश्वेदेवदेवत्यं गोतमऋषिरपश्यत् । जागतमित्यस्यापवादमाह ॥

स्वस्ति नो विराट्स्थाना ॥

स्वस्ति न इन्द्र इतीयमृक् विराट्स्थाना । न जगती नवकौ वैराजत्रैष्टुभ इत्येतल्लक्षणयुक्ता । पुनरपि जागतमित्यस्यापवादमाह ॥

भद्रं कर्णेभिस्तृचं त्रैष्टुभम् ।

भद्रं कर्णेभिरित्येतत्तृचं त्रिष्टुप्छन्दस्कं । न जागतं । अथ भद्र आस एकादशक । तस्मात् । व्यूहेनैकादशक । तदद्य विना व्यूह । रचिता पायु । व्यूह । स्वस्ति नो बृहस्पति । व्यूहेन त्रैष्टुभ । भद्र पश्येम । व्यूह । आ नो भद्रा इत्याद्या वैश्वदेवपशुवपापुरोडाशपशूनां याज्यानुवाक्या इति संहिताभाष्ये ॥

माऽनोऽश्वस्तोमीयं दीर्घतमास्त्रैष्टुभं (१)द्वाविंशं शतृचमश्वस्तुतिः ॥

---

(१) द्वाविंशत्यृचामिति काण्वसर्वानुक्रमपाठः ॥

प ते । यजुस्त्रिष्टुप् ॥

**वैश्वानरस्य त्रिष्टुभं कुत्सः ॥ (१)**

वैश्वानरस्य सुमताविस्येतामृचं वैश्वानरदेवतां त्रिष्टुभं कुत्सऋषिरपश्यत् । अन्त्ययोर्व्यूहः । यजुषोः पूर्वसूत्रवत् ॥

**अग्निर्ऋषिराग्नेयीं गायत्रीं वसिष्ठभरद्वाजौ ॥**

अग्निर्ऋषिरितीमामृचमग्निदेवतां गायत्रीं वसिष्ठभरद्वाजावृषी अपश्यताम् । यजुषोः प्रागुक्तम् ॥

**महाँऽइन्द्रो माहेन्द्रीं वसिष्ठः ॥**

गायत्रीमित्यनुवर्तते । महाँऽइन्द्रो वज्रहस्त इतीमामृचं महेन्द्रदेवतां । गायत्रीछन्दस्कां वसिष्ठऋषिरपश्यत् । यजुषोः प्रागुक्तम् ॥

**तं वऽऐन्द्रीं पथ्याबृहतीं नोधागोतमः ॥**

तं वो दस्ममितीमामृचं इन्द्रदेवत्यां पथ्याबृहतीं । नोधागोतमोऽपश्यत् । जपस्वाध्यायादिषु विनियोगः ॥

**यद्वाहिष्ठं वसूयव आग्नेयीमनुष्टुभम् ॥**

यद्वाहिष्ठमितीमामृचमग्निदेवत्यामनुष्टुभं वसूयवऋषयोऽपश्यन् । अन्त्ययोर्व्यूहः ॥

**एह्यू भरद्वाजो गायत्रीम् ॥**

आग्नेयीमित्यनुवर्तते । एह्यू षु ब्रवाणि त इतीमामृचं गायत्रीछन्दस्कां भरद्वाजऋषिरपश्यत् । एह्यू षु व्यूहः ॥

**ऋतवस्ते बृहती ॥**

आग्नेयीत्यनुवर्तते । ऋतवस्ते यज्ञमितीमामृचमग्निदेवत्यां बृह-

---

(१) महत्वान्माहत्वैन्द्री त्रिष्टुबिति काण्वसर्वानुक्रमेऽधिकः पाठः । एतत्सूत्रमिमहो इन्द्रस्ततोऽग्निर्ऋषिरिति पूर्वापरभावेन सूत्रे बोद्धव्ये काण्वसर्वानुक्रमे । एतदग्रे सूत्रषट्कं काण्वसर्वानुक्रमे नास्तीति बोध्यम् ॥

तीछन्दस्का नवकाष्टकैकादशाष्टिनो विषमपदेत्येषा इयं बृहती, अत्र तु प्रथमः पादो दशकः । तेनैकाधिका ॥

### उपह्वरे वत्सः ॥

उपह्वरे गिरीणामितीमामृचं वत्सऋषिरपश्यत् । अस्याः सोमोदेवतेति संहिताभाष्ये । गायत्रीछन्द । अनुक्तानां गायत्रमितिवक्ष्य-माणसूत्रात् । अनाद्यौ सप्तकौ ॥ ६ ॥

### उग्रा ते गायत्रं तृचꣳ सौम्यमामहीयवः ॥

उग्रा ते जातं । स न इन्द्राय । एना विश्वानीत्येतत्तृचं सोम-दैवतं गायत्रीछन्दस्कं आमहीयवऋषिरपश्यत् । त्रिवि सत् । वह्नयः एनां । युञ्जानि । एषु व्यूहः । युञ्जानीत्यत्र तालव्यव्याख्यासे-न पूरणं । इति छन्दोभाष्ये ॥

### अनुवीरैर्मुद्गलो यज्ञपुरुषस्त्रिष्टुभम् ॥ (१)

अनुवीरैरित्येतामृचं त्रिष्टुप्छन्दस्कां मुद्गलो यज्ञपुरुषऋषिरप-श्यत् । आशीरियं देवादेवताः । द्वितीयो दशकः । तृतीयो द्वादश-कः ॥

### अग्ने पत्नीर्मेधातिथिराग्नेयीं गायत्रीम् ॥

अग्ने पत्नीरितीमामृचं अग्निदेवतां गायत्रीं मेधातिथिरपश्यत् । अग्ने पत्नीरित्याद्या अष्टाग्निष्टोमे नेष्टुर्याज्याः । प्रथमा प्रातः सव-ने नेष्टृचमसयागे याज्या ॥

### अभियज्ञं द्व्यृचमृतुदैवतं मेधातिथिः ॥

अभियज्ञं । द्रविणोदा इत्येतत् द्व्यृचमृतुदैवतं मेधातिथिऋषि-रपश्यत् । अतएतदपि गायत्रीछन्दस्कं । अनुक्तानां गायत्रमितिसू-

---

(१) मौद्गल्यो इति काण्वसर्वानुक्रमपाठः । एतत्सूत्राग्रे मा नास्त्विष्टका अशिषऐन्द्री-माशिषम् ) इतपाठः । एतदग्रे सूत्रषट्कं नास्ति काण्वसर्वानुक्रमे ॥

घात् । वनावहति मथकः । त्वष्टा- ह्योति ससकः । तेनाध्वरपूर्तिः, भ-स्य दृष्टृवस्य ऋतुयागे नैष्टुर्याज्यात्वेन विनियोगः ॥

**तवायमैन्द्री त्रिष्टुभं विश्वामित्रः ॥**

तवायमितीमामिन्द्रदेवतां त्रिष्टुभं विश्वामित्रोऽपश्यत् । माध्यंदिने सवने नैष्टृचमसयागे याज्या । तवायं । द्वौ व्यूहौ । भक्षिमस-द्वौ व्यूहः ॥

**अमेव नो जगती गृत्समदः ॥**

अमेव नइतीमामृचं जगतीं गृत्समदोऽपश्यत् । लिङ्गादियं त्वष्टृदेवत्या । तृतीयसवने नैष्टृचमसयागे याज्या ॥

**स्वादिष्ठया मधुच्छन्दाः सौम्यौ ॥**

स्वादिष्ठया, रक्षोहा विश्वचर्षणिरितीमे ऋचौ सोमदेवत्ये मधुच्छन्दा ऋषिरपश्यत् । अनयोर्गायत्रीछन्दः ॥

**अनुक्तानां गायत्रम् ॥**

स्वादिष्ठया, रक्षोहा । उपह्वरे । अभियज्ञं । द्रविणोदा इत्यादीनामनुक्तानामनुक्तछन्दस्कानां गायत्रंछन्दो ज्ञेयं । अनेनैव सर्वत्र सिद्धेरिन्द्रसोमवैन्द्र्यौ गायत्र्यौ, अग्निस्त्रैविराड्मेधी गायत्रीमित्यादौ गायत्रीग्रहणं पुनरुक्तमिव ॥ ७ ॥

**समास्त्वाऽऽग्निकोऽध्यायः प्रजापतेरार्षम् ॥**

समास्त्वाग्नऽऋतवइत्ययमाग्निकोऽध्यायः अग्निरिष्टकचितः पञ्चचितिकः स्थलः । अग्नेः सम्बन्धी आग्निकः । प्रजापतिरार्षं । प्रजापतिरस्याध्यायस्य ऋषिरित्यर्थः । एतच्चपुनरुक्तं । आग्निकत्वेनैवाग्नेयस्य सिद्धेः । अथाग्निं प्रजापतिरपश्यदिति व्यवहितत्वेन तस्यैव स्मरणार्थमिति न दोषः ॥

**सामिधेन्यो नवाग्नेय्यस्त्रिष्टुभोऽग्निना दृष्टाः ॥**

अस्मिन्नध्याये समास्त्वाग्न इत्याद्या नव ऋचोऽग्निदेवत्यास्त्रिष्टुभो- ऽग्निना ऋषिणा दृष्टाः । अग्निः प्रजात्य सप्तना अपश्यत्, समास्त्वाऽ ग्नऽऋतवो वर्धयन्त्विति । तथा ता आग्नेय्य. प्राजापत्या "यदग्निरप- श्यत्तेनाग्नेयो यत्प्रजावतीरं० समेधते न प्राजापत्यादिति च श्रुतेः" । इष्टकापद्यो समिध्यमानसमिद्धयोरन्तराले आसा विनियोगः ॥

## अग्निस्त्वं पि. कर्माङ्गभूतमग्निं स्तौति ॥

अत्राध्याये प्राक्पौषोऽध्यायेऽग्निरपश्यत् । ऋषिरग्निः कर्मा- ङ्गभूतमग्निं स्तौति ॥

## ऊर्ध्वा द्वादशर्चं माग्नियमौष्णिहं विषमपदं प्राजाप- त्यमाग्नेयमग्निरपश्यत् ॥

ऊर्ध्वाऽस्य इत्येतद् द्वादशर्चं माग्नीसञ्ज्ञं उष्णिक्छन्दस्क विषमप- दं प्राजापतिदेवतमग्निदेवत चाग्निर्ऋषिरपश्यत । विषमाऽनियता यत्र पादा यस्य तद्विषमपदं । द्वादशापि इति स एता अपश्यद्दूर्ध्वाऽस्य समिधोभवन्ति । तथा ता आग्नेय्य प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिमाग्नीषात्तेन प्राजापत्यास्ता- विषमा विषमपदा विषमाक्षरा, "विषमाणि हि छन्दांऽसौति श्रु ते" इष्टकापद्यो मयाजयाज्याः एता । अत्राग्नेयं चैकच प्राजापत्यमि- त्यत आह ॥

## अग्निर्हि प्रजापतित्वेन संस्तूयते तेन प्राजापत्यम् ॥

हि यत कारणादग्निरत्र प्रजापतित्वेन प्रजापतिरूपेण संस्तूय ते । तेनैतद् द्वादशर्चं प्राजापत्यं । "प्रजापतिरग्निरित्यादिश्रुते" । अथ सेगये द्वौ व्यूहौ, मा त्वा, निक्रमणन्तूपसत्ता द्वादशकौ । तयापीयं त्रिष्टुबेव न जगती । कुत । द्वौ तु जागतौ यस्मा सा जागती, "द्वौ- जागते जगती चैष्टुभे त्रिष्टुबिति श्रुते." । अभेद्यान्ने, सजातानां, द्वाद

शकः । प्रतिनिधोऽष्टकः । प्रत्यचितिं । व्यूह', विश्वाद्यग्ने व्यूहः । अ-
गाधृष्य', अत्र द्वितीयएकादशक', अन्ये द्वादशका', बृहस्पते द्वादश-
क. । उदुष्वांइत्यत्र तु विषमाचरत्वं विषमपदत्व चाक्षमेव ॥

पीवोऽअन्ना द्वे वायव्यत्रिष्टुभौ वसिष्ठः ॥ (१)

पीवोऽअन्ना रयिवृध', राये नु, इत्येते द्वे वायुदेवते त्रिष्टुभौ वसिष्ठ-
ऋषिरपश्यत् । यथैतं वायवे नियुत्वते शुक्लं तूपरमालभेते इत्यस्य
पशो, पीवोऽअन्ना रयिवृध इत्याद्याः षड्याज्यानुवाक्या वपापुरोडाश-
पशूनां क्रमेण भवन्तीति संहिताभाष्ये, विश्वेषरः, व्यूहः ॥

आपो ह द्वे प्राजापत्ये हिरण्यगर्भः प्राजापत्यः ॥ (२)

त्रिष्टुभावित्यनुवर्त्तते । आपो ह, यश्चिदापइतीमे द्वे ऋचौ प्रजापति-
दैवते त्रिष्टुभौ, प्रजापतेरपत्यं हिरण्यगर्भऋषिरपश्यत् । ततो देवा-
नां । त्रयोदशका. तेन दश्यधिका ॥

प्रयाभिर्द्वे वायव्ये वसिष्ठः ॥ (३)

त्रिष्टुभावित्यनुवर्तते प्रयाभिर्यासि । आनो नियुद्भिरितीमे
द्वे ऋचौ वायव्ये वायुदेवत्ये त्रिष्टुभौ वसिष्ठऋषिरपश्यत् । प्रयाभि',
निवीरं । व्यूहः । आनो द्वादशकः । यूयं पात । व्यूहः ॥

नियुत्वान्वायव्याः षट् ॥

नियुत्वान्वायवागहीत्याद्याः षडृचो वायुदेवताः ॥

वायो शुक्रोऽनुष्टुप् ॥

---

(१) काण्वसर्वानुक्रमे वायव्यपदमत्र सूत्रे नास्ति । एतदग्रे वायुरग्रेगा गायत्री ति काण्वसर्वानुक्रमे पाठो बोध्यः ॥

(२) प्रयाभिर्वासिष्ठौ त्रिष्टुभाविति काण्वसर्वानुक्रमपाठः । एतदग्रे वायो ये गायत्री-तीदं सूत्रं, एतदग्रे सूत्रचतुष्टय नास्ति तदग्रे एकत्रा चेद सूत्रमस्तीति बोध्यम् ॥

(३) वायो शुक्रोऽनुष्टुप् पुरुमीढाजमीढावनुष्टुभमाजमीढमितिपाठः काण्वसर्वानुक्रमीयो बोध्यः ॥

आना पर्या मध्ये वायो शुक्रइत्यनुष्टुप् ॥

एकया च त्रिष्टुप् ॥

एकया च दशभिश्चेत्येषा त्रिष्टुप् । द्वाभ्यामिष्टये द्वे व्यूही दृश्यूनता वा । अन्या गायत्र्य । अन्त्यास्तस्रो नियुत्वायो, वायुरग्रेगा । वायो येते । तव वायो॥

नियुत्वान्वायो गायत्रीं गृत्समदः ॥

नियुत्वान्वायो । वायोशुक्रइतीमे ऋचौ गृत्समदऋषिरपश्यत् ॥

वायो शुक्र पुरुमीढाजमीढौ ॥ (१)

वायो शुक्रइतीमामृचं पुरुमीढाजमीढाहयो पपश्यताम् ॥

तव वायो व्यश्व आङ्गिरसः ॥ (१)

तव वायो इतीमामृचं अङ्गिरसोपत्यं व्यश्वऋषिरपश्यत । अस्य च तृचस्य वायव्येऽष्टकापश्वपशौ वपादीनां याज्यानुवाक्यात्वेन विनियोग ॥

अभित्वा वसिष्ठऐन्द्रं प्रगाथम् ॥ (२)

अभित्वा शूर नोनुमइतीमं प्रगाथं इन्द्रदेवतं वसिष्ठऋषिरपश्यत् ॥

प्रथमा बृहती द्वितीया सतोबृहती ॥

तत्र प्रगाथे प्रथमा, अभित्वेत्येषा बृहती । द्वितीया, न त्वावानित्येषा सतोबृहती । एतयोर्लक्षणमेताभ्या बृहतीत्रयसम्पादनप्रकारः प्रागुक्त ,तत्र पूर्वा बृहती सतोबृहत्युत्तरा ताभ्यां तिस्रो बृहत्य सम्पा-

(१) गायत्री।(१ सवा वायव्या हिरण्यगर्भोऽनुवाक प्रतीकोक्तो,येनद्यौ पञ्चानुष्टुभः,आद्ये द्वे हिरण्यगर्भ,आपो ह यस्य प्राजापत्या कदेवत्या प्रजापते न प्राजापत्या त्रिष्टुप्। इत्यधिक पाठ काण्वसर्वानुक्रमे बोध्य ॥

(१) आभित्वा दृश्यूच वसिष्ठ काण्वपाठ ॥

दिता इत्येष । ईशानमस्य । व्यूहः । नत्वावाम् व्यूहः ॥

त्वामिद्धिवर्ठं॰ शंयुर्बार्हस्पत्यः ॥

त्वामिद्धि इत्यामहतीमनृचद्वयात्मकं प्रगाथमिन्द्रो दैवतं बृहस्पतेरपत्यं शंयुरार्षं पिरपश्यत् । तत्र ऋग्द्वये प्रथमा त्वामिद्,द्वितीयं बृहती द्वितीया,स त्वं नश्चित्रे,त्येषा सतोबृहती । बृहतीसतोबृहतीभ्यां बृहतीत्रयसंपादनं च पूर्वं विस्तरेणोक्तमिति नेह पुनरुच्यते । अथ त्वामिद्धि,त्वांवृत्रेषु व्यूहः । तां काष्ठासु द्वौ व्यूहो, गामश्वं द्वौ व्यूहो, "अग्नौ प्रथेनठं॰ सामभिः परिगायतीत्यध्वर्योः सामगानं विहितं नाद्वध्वर्योर्गायेदिति च" । तेनात्र तेषां साम्नां योनिभूता ऋचो यजुर्वेदे पठ्यन्ते । अभित्वा द्वे रथन्तरस्य योनी । "रथन्तरं दक्षिणे पक्ष इतिश्रुतेः" । त्वामिद्धीति द्वे बृहतः । "बृहदुत्तरेप क्ष इति श्रुतेः"। कया न इति तिस्रो वामदेव्यस्य योनयः "वामदेव्यमात्मन्निति श्रुतेः" । यज्ञायज्ञा वः, ऊर्जो नपातं, इति द्वे यज्ञायज्ञियस्य । यज्ञायज्ञियं पुच्छमिति हि श्रूयते । एते यानि संवत्सरदीक्षे संवत्सरस्त्येव । अन्यस्मिन्पक्षे "ऋतुष्टा यज्ञायज्ञीयं गेयमिति शाट्यायन." । "अथ प्रजापतेर्हृदयं गायतीत्येनं ॥ अनृचं गीयते प्रजापतेर्हृदयमनृचं गायतीति ब्राह्मणान्तरात् ॥

कया नऽऐन्द्रं तृचं गायत्रं वामदेवोऽन्त्या तु पादनिचृत् ॥

कया नश्चित्रऽआभुवदित्येतत्तृचं इन्द्रदैवतं गायत्रीछन्दस्कं वामदेवऋषिरपश्यत् । तु पुनः । अस्मिन्तृचे अन्त्या अभीषुणइत्येषापादनिचृद्गायत्री यस्यां हि त्रयः पादाः सप्ताक्षराः । पादनिचृदुच्यते । अयः सप्तकाः पादा निचृदित्युक्तेः, कस्त्वा व्यूहः ॥

यज्ञायज्ञा वऽऊर्ज्जो नपातठं॰ शंयुः ॥

यज्ञायज्ञाव,ऊर्जोनपातमित्येतदृग्द्वयं शंयुरार्षं पिरपश्यत् ॥

पाहि नो गर्भः प्रगाथः ॥

स्तौषीत् । द्वितीयेनार्धेन अभीशूनामित्यनेन रश्मीनस्तौषीत् ॥

हरीन् ॥

तीव्रान्घोषानित्यया हरीनश्वानस्तौषीत् ॥

रथम् ॥

रथवाहनमित्यनया रथमस्तौषीत् ॥

रथगोपायितॄन् ॥

स्वादुषं० सद इत्यनया रथगोपायितॄनस्तौषीत् ॥

जगत्या लिङ्गोक्तदेवताः ॥

ब्राह्मणासः पितर इत्यस्या जगतीछन्दस्कायया लिङ्गोक्ता ब्राह्मणादयो देवताः, ब्राह्मणासः पितर इति व्यूहेनैकादशकः । तेनैकोना ॥

द्वाभ्यां त्रिष्टुबनुष्टुभ्यामिषुम् ॥

सुपर्णं वस्ते, ऋजीते परीत्याभ्यां द्वाभ्यां यथाक्रमं त्रिष्टुबनुष्टुभ्यामिषुमस्तौषीत् ॥

अनुष्टुभा कशाम् ॥

आजङ्घन्तीत्यनयानुष्टुप्छन्दस्कया कशामश्वाजनीमस्तौषीत् । अश्वानां भयप्रकाशनार्थां करोत्युच्यते । आजङ्घन्ती व्यूहः ॥

ततो हस्तघ्नम् ॥

ततोऽनन्तरं अहिरिवेत्यनया हस्तघ्नमस्तौषीत् । ज्याया हेतिं । व्यूहः । पुमान्पुमांसं द्वादशकः ॥

ततस्तृचौ रथदुन्दुभिदेवत्यौ ॥

ततोऽनन्तरं यथाक्रमं रथदुन्दुभिदेवत्यौ तृचौ, वनस्पते वीड्वङ्गः । दिवः पृथिव्याः, इन्द्रस्य वज्र इत्ययं तृचो रथदेवत्यः । उपश्वासय, प्राक्रन्दय, आमूरज इत्ययं तृचो दुन्दुभिदेवत्यः ॥

ऐन्द्रोऽर्धर्चोऽन्त्यः ॥

सङ्ग्रामाङ्गं स्तुतवानित्यर्थः। ऋक्शः सङ्ग्रामस्यैकवचनाच्च, वीप्सायामि तिशस् । पत्यृचाऽसा संनाहादीनि सग्रामाङ्गान्येव देवता "स्तुतिभाजो देवताभवन्तीति वेदवचनात्" । तान्येव सग्रामाङ्गानि क्रमेणाह ॥

### सन्नाहम् ॥

जीमूतस्येत्यनया त्रिष्टुभा सन्नाहमस्तौषीत् । अनाविद्धया व्यूह ॥

### कार्मुकम् ॥(१)

धन्वनेत्यनया कार्मुकं । धनुरस्तौषीत् ॥

### गुणम् ॥

वक्ष्यन्तीवेत्यनया धनुषोगुण ज्या प्रत्यञ्चामस्तौषीत् । ज्याऽऽह्वं व्यूह ॥

### आर्त्नी ॥(२)

तेऽआचरन्तीत्यनया आर्त्नीं धनुः कोटी अस्तौषीत् ॥

### तूणम् ॥(३)

बह्वीनामित्यनया तूणं इषुधिं अस्तौषीत् ॥

### जगत्यर्द्धेन सारथिमर्द्धेन रश्मीन् ॥(४)

रथे तिष्ठन्नित्यस्या जगत्या जगतीछन्दस्काया अर्द्धेन सारथिं च

---

(१) अत्र धनुः पद काण्वसर्वानुक्रमेऽस्तीति ॥

(२) इत्यत्र एतत्सूत्रामे कण्वपाठ ॥

(३) एतत्सूत्रामे इषुधयामिति काण्वपाठ ॥

(४) ततो जगत्यर्द्धेन सारथिमुत्तरार्द्धेन रश्मीन्-ततोऽनुष्टुभा कशामन्त्यया दुन्दुभिं प-धामन्त्वालिङ्गमनुक्त-दस्का सन्नाहस्त्रिष्टुभा, यदक-दस्ययोदशाश्वस्तुतीत्रिष्टुभो भार्गवजमदग्निर्ददर्श दर्शितभाश,समिद्धोऽश्च द्वादशाप्रीत्रिष्टुभो जमदग्निरमे गायत्र्याय रि-दशाह वेषान्ते द्रव्यदेवता,आग्नेय कृष्णग्रीवत्यानाऽएकादशिन्योर्द्वयो पशुदेवतावा-झणेनाभिधीयन्ते । अध्यायद्वयमश्वामरास्ऽइत्यध्यायरशामे वक्ष्याति काण्वसर्वानुक्रमका-र.॥

## स्निद्दर्श दीर्घतमाश्च ॥(१)

यदक्रन्दः प्रथममित्याद्यास्त्रयोदशर्चः । अश्वस्तुतिरूपास्त्रिष्टुभो भृगोरपत्यं जमदग्निर्ऋषिर्दीर्घतमाश्च ददर्श दृष्टवान् । यमेन दत्त । द्वादशकः । असि यमः । असि त्रितः । व्यूहः । त्रीणि, द्वौ व्यूहौ । उशैवते । अनुगाव । अनुदेवाः । हिरण्यशृंगो । यत्राक्षिपुः । तव शरीरं । उपप्रागात्सदनं । देवद्रीचा, यथाशाखे । एतेषु व्यूहः । होतुरश्वाभिधये एतासां विनियोगः ॥

## समिद्धोऽद्य द्वादशाप्रीस्त्रिष्टुभो जमदग्निः ॥

समिद्धोऽद्येत्यनुवाकस्याद्या द्वादशर्चमाप्रीसञ्ज्ञास्त्रिष्टुभो जमदग्निर्ऋषिरपश्यत् । ददर्श "अग्निरग्निभिरेव प्रीणीयादिति श्रुतेः" । समित्तनूनपातादयो देवता । दूरदूतः कविः । देवयाच, आजुह्वानः । आयाह्यग्ने । त्वं देवानां । सुप्रणान् । एतेषु व्यूहः । देवेभ्योऽभितये । द्वौ व्यूहौ । देवेभ्योभवत । तिस्रो देवीः, सरस्वती । उपावसृज । सद्योजातः ॥ १२ ॥

## केतुं कृण्वन्नाग्नेयीमनिरुक्तां गायत्रीं मधुच्छन्दाः ।

केतुं कृण्वन्नितीमामृचमग्निदेवतां गायत्रीं, मधुच्छन्दा ऋषिरपश्यत् ॥

## जीमूतस्येव पायुर्भारद्वाजः संग्रामाङ्गान्यस्तौषीत् ॥(२)

भारद्वाजो भरद्वाजस्य पुत्रः पायुर्ऋषिः, जीमूतस्येव भवतीत्यादिभिः ऋक्शः एकैकया ऋचा वक्ष्यमाणानि संग्रामादीनि संग्रामाङ्गानि अस्तौषीत्स्तुतवान् । एकैका ऋचा यथाक्रमं एकैकं क

---

(१) अत्रारभ्य सूत्रद्वयं काण्वसर्वानुक्रमे नास्तीति बोध्यः ॥

(२) अत्र काण्वसर्वानुक्रमे जीमूतस्येवेत्यादशभिः क्रमात्स्तुत्याधिकः पाठो बोध्यः ॥

ष्टु । नाराशंसी बृहती । ऊर्जाहुती, व्यूह्यः । शक्वरी । देवी देव्यौ । अतिजगती । देवीस्तिस्रः । एकाधिका ब्राह्मी अनुष्टुप् । देवो नराशंसः । व्यूह्य, अतिजगती । देवो वनस्पतिः, व्यूह्य अतिजगती । देवं बर्हिः, ब्राह्मी बृहती । देवोऽग्निः, ब्राह्मी बृहती । अग्निमद्य । एकाधिका ब्राह्मी गायत्री । सूपस्था द्वौ व्यूह्यौ । ब्राह्मी अनुष्टुप् त्वामद्य । एकाधिका विंशतिः ॥ १० ॥

## समिद्धोऽग्रजन्नाश्वमेधिकोऽध्यायः ॥

समिद्धोऽञ्जन्कदरमित्ययमध्याय आश्वमेधिकः अश्वमेधसंबन्धी । तस्य प्रजापतिरेवाऋषिः, ननु तत्र चत्वारोऽध्यायाः प्रजापतिरपश्यदिति, चतुर्णामेवाध्यायानां प्रजापतिर्ऋषिरस्य । तत्कथमस्य प्रजापतिर्ऋषिः । उच्यते । "प्रजापतिरकामयत सर्वान्कामानाप्नुयां सर्वा व्यष्टीर्व्यश्नुवीयेति स एतमश्वमेधं त्रिरात्रं यज्ञक्रतुमपश्यदिति श्रुतेः" । प्रतिपादितः साधारणः प्रजापतिर्ऋषिरत्रापि भवत्येवेति ॥

**आद्या आप्रीस्त्रिष्टुभ एकादशाश्वस्तुतीर्बृहदुक्थो वामदेव्यो ददर्शाश्वो वा सामुद्रिः ॥**

आद्याः प्रथमा एकादशर्चस्त्रिष्टुभ आप्रीसंज्ञा अश्वस्तुतिरूपा वामदेवपुत्रो बृहदुक्थो ददर्श । अथवा सामुद्रिः समुद्रपुत्रोऽश्व ऋषिः एता एकादशर्चो ददर्श, ताः कथमाप्रीसंज्ञकाः कथिताः "समिद्धोऽञ्जन्कदरं मतीनामिति बार्हदुक्थी भवत्याप्रीर्बृहदुक्थो ह वै वामदेव्योऽश्वो वा सामुद्रिरश्वस्याप्रीर्ददर्शेति श्रुतेः" । समित्तनूनपादिडादयः आसां देवताः प्रजानन्वाजी द्वौ व्यूह्यौ । ऊर्ध्वा अस्य, आशु च । द्वौ व्यूह्यौ । अश्वो घृतेन । व्यूह्य ॥

**यदक्रन्दस्त्रयोदशाश्वस्तुतिस्त्रिष्टुभो भार्गवो जमद-**

त्वामद्य प्रतीकः। त्वामद्येति प्रतीकं यस्मिंस्तथा। न केवलमत्र। किंतु उभयत्र। उभयोरैन्द्रवायोधसानुवाक्ययोरयं,त्वामद्य प्रतीक एव। अग्निमद्य एकाधिका प्राजापत्याजगती, सूपस्था। ब्राह्मीउष्णिक्। त्वामद्यएकाधिका विकृतिः। अथशाऽग्निमद्येत्यत आरभ्य सूक्ता सूक्तीत्यन्त. प्रैषं एकं यजुः, तदाऽनियताक्षरत्वाच्छन्दोनास्ति॥

समिधानं मद्द्वायोधसऽआप्रियएकादशप्रयाजप्रैषा॥

होता यक्षत्समिधानं महदित्याद्या एकादशसंख्या वायोधसपशो प्रयाजानां प्रैषाः, आप्रियइत्याप्रीदेवता समित्तनूनपादादिदेवता इत्यर्थः॥

तथैव देवं बर्हिरनुयाजप्रैषाः॥

तथैव वायोधसपशावेव देवं बर्हिर्वयोधसमित्याद्या एकादशानुयाजानां प्रैषाः, बर्हिरादिदेवताः॥

अग्निमद्य वायोधसः सूक्तवाकप्रैषः॥

वयोधसः अयं वायोधसः। अग्निमद्येत्ययं वायोधसस्य पशोः सूक्तवाकप्रैष इत्यर्थः। वयोधसा देवतया तत्सम्बन्धिकर्म लक्ष्यते, वायोधस इति षष्ठ्येकवचनं पूर्वसूत्रे तु सप्तम्येकवचनं। अथानयोरनुवाक्ययोश्छन्दांस्युच्यन्ते। होता यक्षत्समिधानं। द्वौ व्यूहौ। अतिजगती। तनूनपातं। एकाधिकातिजगती, ईडेन्यम्। व्यूहः। शक्करी। सुबर्हिषां द्वौ व्यूहौ। शक्करी, व्यचस्वतीः। द्वौ व्यूहौ अतिशक्करी। सुपेशसा व्यूहः। अतिशक्करी। प्रचेतसा। एकाधिका शक्करी। पेशस्वती। एकाधिकाशक्करी। सुरेतस त्वष्टारं। एकाधिकाशक्करी। वनस्पतिं, व्यूहः। अष्टिः, स्वाहाकृतीः। अतिशक्करीः। देवं बर्हिः, देवीद्वारः। एकाधिके आर्च्यौ त्रिष्टुभौ। उषासानक्ता। जोष्ट्री। ऊर्-

न याप्रीदेवता, समित्तनूनपादिळादिदेवताका, प्रयाजानां प्रैषा', होता यक्षत्समिधेन्द्रमिडस्पदइत्यस्यारभ्य होतायक्षदिन्द्रमित्यन्ता, तत्र समिधेन्द्र । व्यूह । आर्षीत्रिष्टुप । तनूनपात व्यूह । धृति जगती । इडाभिरिन्द्र । साम्नीउष्णिक । बर्हिषीन्द्र । आर्षीत्रिष्टुप । ओजो न । व्यूह । अतीजगती । उपेऽइन्द्रस्य । आर्षीत्रिष्टुप । दैव्या होतारा, अतिजगती । तिस्रादेवी, व्यूह । साम्नी अनुष्टुप् । त्वष्टारमिन्द्र । व्यूहो, अतिजगती । वनस्पतिम् । द्वौ व्यूहौ । । शक्करी । होता यक्षदिन्द्र व्यूह, शक्करी ॥

## देवं बर्हिरनुयाजप्रैषा ऐन्द्राएकादशैव ॥

देव बर्हिरित्यादयएकादशैन्द्रा,ऐन्द्रयागे सम्बन्धिनएवानुयाजप्रैषा । एवकारो भिन्नक्रम । ऐन्द्र एवेति । देवतास्तु बर्हिरादयएव । तत्र देव बर्हि । व्यूह । अतिजगती । देवीद्वारे, एकाधिका शक्करी, अथवा नवो व्यूहा, अतिशक्करीति । देवी उषासा । साम्नी उष्णिक् । देवी जोष्ट्री । एकाधिकाऽतिजगती । ऊर्जाहुती नवौ व्यूह । । विराति, देवा दैव्या । नवो व्यूहा । अतिजगती । एकाधिकाजगती वा । देवीस्तिस्र । धृतिजगती । देवऽइन्द्र । शक्ति, देवो देवे, व्यूह । अतिशक्करी । देव बर्हि । आर्षीत्रिष्टुप् । देवोऽग्नि व्यूह । आर्षीत्रिष्टुप ॥

## अग्निमद्यैन्द्रः सूक्तवाकप्रैष. ॥

अग्निमद्येत्ययमैन्द्रऐन्द्रयागसम्बन्धसूक्तवाकप्रैष ॥

## त्वामद्य प्रतीकउभयत्रापि ॥

त्वामद्य ऽइत्यपदद्वय मन्त्र । उभयत्रापि ऐन्द्रानुयाजे वायोधसानुयाजे च प्रतीक प्रतीकोक्त, आदिमात्रेणापाठ सकलो ग्रेय । अथवा सूक्तवाकप्रैषद्वयस्य विशेषणम्, कीदृश सूक्तवाकप्रैष. ।

सहस्रशीर्षा पुरुषइत्यादि षोडशर्चमानुष्टुभं अनुष्टुप्छन्दस्कं । त्रिष्टुबन्त्यं । त्रिष्टुबन्त्या षोडशी यस्य तत्त्रिष्टुबन्त्यं । जगद्बीजं जगतः कारणभूतः पुरुषोऽस्य षोडशर्चस्य देवता आश्वमेधे नियुक्तानां पशूनामभिषवे विनियोगोऽस्य । अत्र पुरुषएव, यद्भूतं । व्यूहः । त्रिपादूर्ध्वं अवयवाः । ततोविष्वङ् व्यूहः । सम्भृतम् । आरण्याः । ये केच । साध्याः सन्ति । यत्पुरुषम् । कतिधा । एतेषु व्यूहः । मुखं किमस्य, बाहू । च- न्द्रमाऽस्य । तानि धर्माणि । यत्र पूर्वे । एतेषु व्यूहः ॥

अद्भ्यः षडृचउत्तरनारायणो मन्त्रः ॥

अद्भ्यः सम्भृतइत्यादिः षडृचः । उत्तरनारायणसञ्ज्ञो मन्त्रः । अस्य षडृचस्यादित्योपस्थाने विनियोगः, अत एवादित्यो देवता । सञ्ज्ञाकरणमुत्तरनारायणेनादित्यमुपस्था- येत्यादौ व्यवहारार्थम् ॥

आद्यास्तिस्रस्त्रिष्टुभः ॥

अस्मिन्षडृचे आद्यास्तिस्रस्त्रिष्टुभ, अद्भ्यः सम्भृत, वेदाहमेतं प्र- जापतिश्चरति । एतास्तिस्र ऋचस्त्रिष्टुप्छन्दस्काः । तमस्यत्वंस्य । द्वादश- क । नान्यः पन्थाः । व्यूहः । अजायमानो द्वादशकः ॥

द्वे अनुष्टुभौ ॥

अस्मिन्षडृचे चतुर्थीपञ्चम्यौ यो देवेभ्यो, रुचं ब्राह्ममितीमे अनुष्टु- भौ ॥

अन्त्या त्रिष्टुप् ॥

अन्त्या श्रीश्च तइत्येषा त्रिष्टुप् । द्वौ तु जागतौ यस्मा इतीयं त्रिष्टु- प् । व्यूहः ॥ १४ ॥

तदेव सर्वमेधोऽध्यायमात्मदैवतः सप्तमेऽहनि सर्वहोमे विनियुक्तः ॥

तदेवं विनिर्दिश्याध्याय. सर्वमेधसम्बन्धी याज्ञदैवत सम्प्रत्यङ्ग्न्यारोपणसम्बन्धी सर्वं जुहोमीत्यस्मिन्सर्वहोमे विनियुक्त ॥

सर्वमेधं ब्रह्मस्वयमवैक्षत तदीयं मन्त्रगणं प्रत्यगुयमच्छेत्येतस्मात् ॥

स्वयं तु ब्रह्मसर्वमेधं तमायुमच्छेत्येतस्मात्प्राक् तदीय मन्त्रगणं च ऐक्षत ददर्श ॥

आद्ये द्वे अनुष्टुभौ ॥

तदेव, सर्वं निमेषाइत्येते द्वे आद्ये ऋचावनुष्टुभौ ॥

न तस्य द्विपदागायत्री ॥

न तस्य प्रतिमेतीयं द्विपदागायत्री ॥

हिरण्यगर्भयतस्त्वो मा मा हिं० सीद्यस्मान्न द्वे एताः प्रतीकचोदिताः ॥

हिरण्यगर्भ समवर्तत, य प्राणत । यस्येमे, यस्माज्जाता इत्येता यतस्त्व । मा मा हिं० सीज्जनितेत्येका । यस्मान्न जात, इन्द्रश्च सम्राडित्येते द्वे एताश्चतस्रोऽत्र प्रतीकचोदिता पूर्वं पठितत्वाद्वा दि मावे योवाजा । यदि प्रतीकचोदितास्तत किमतआह ॥

ब्रह्मयज्ञेऽध्येया ॥

ब्रह्मयज्ञे स्वाध्यायाध्ययने एता सकला अध्येया पठनीया । न वेतसमत्र कि तु ॥

सर्वमेवम् ॥

यत्र यत्र लोक, ता, इन्द्र । स्वामव्यस्यवे । आपो ह यद्बृहती र्येविद्वान । तं मत्वाऽस्य येन । इमहँ इन्द्रो यस्पोजसा, कदा चन स्त रीरसि, कदा चन प्रयुच्छसि । सम्प्रसवाऽस्य वर्तायर्य देवानां । तं प्रत्नथाऽस्य येनो, ये देवासः, पावकऽश्रवाः, विश्वेभिः सोम्य मदृर्भो, वा

सपर्यणीधृतः । ततो वारद्वयं सं प्रस्रवाः,यं वेनः । इमाउत्त्वा, सच्याय,सपर्ण॰ सहस्र,मूर्ध्वंजपुषः, यद्‌इमा विभ्रा, विश्वकर्मा, यो नः पिताऽ,अपतेऽस्य मो देहीत्येवं, या या. प्रतीकचोदिता ऋचः तत्र सर्वत्र ता भूयस्ते सकला ध्येया. । भूयस्त्वग्रहण जपादेस्पुपलक्षणम् ॥

एषो ह चतस्रस्त्रिष्टुभः ॥(१)

एषो ह देवः । यच्चाज्यातं । येन द्यो ,यद्‌कन्दसीत्येताश्चतस्रस्त्रिष्टुभः । प्रत्यङ्ग्रना जागतः । वीर्य ज्योती च जागतः ॥

आपो ह यद्विप्रतीकचोदिते ॥

आपो ह यद्बृहतीर्यश्चिदापइत्येते द्वे ऋचावत्र प्रतीकचोदिते । भूयस्त्वादाध्येये ॥ १५ ॥

वेनस्तत्पस्य त्रिष्टुभः ॥

वेनस्तत्पश्यन्नित्याद्या पञ्चऋचस्त्रिष्टुभः, अत्र विश्वं, प्रतात् । तत्रीयो भासन् । एतेषु व्यूह ॥

सदसस्पतिं तृचेन मेधाकामो मेधां याचते ॥

सदसस्पतिमद्भुतमित्यादिकेन तृचेन कश्चिन्मेधाकामो मेधां धारणवतीं बुद्धिं याचते प्रार्थयते ॥

प्रथमा गायत्री लिङ्गोक्तदेवता ॥

अत्र तृचे प्रथमा सदसस्पतिमित्येषा गायत्रीलिङ्गोक्तसदसस्पतिदेवता । प्रियमिन्द्रस्य । व्यूह ॥

द्वितीयाग्नेय्यनुष्टुप् ॥

द्वितीया यां मेधामित्येषा आग्नेयी अग्निदेवत्या अनुष्टुप् । यां

(१) अत्र, यस्मा न,प्रतीकोक्ता यरीत्य भूतानि, द्वे परमात्मयाद्‌न्यौ त्रिष्टुभादेव, ग्रानव्याख्यतत्रानुक्रमेऽधिक. पाठ ॥

मेधां सप्तक:, द्वितीये व्यूह: ॥

तृतीया लिङ्गोक्तदेवताऽनुष्टुप् ॥

मेधां मे वरुण इत्येषा तृतीया ऋक्लिङ्गोक्तवरुणाग्न्यादिदेवता । अनुष्टुप्छन्दस्का । प्रथमो नवक: ॥

इदं मे मान्त्रवर्णिक्यनुष्टुप् ॥

इदं मे ब्रह्म चेतीयं मान्त्रवर्णिकी मन्त्रवर्णोक्तदेवता अनुष्टुप् । अत्र प्रथमतृतीयौ नवद्वितीय: सप्तक:, तृतीयोऽपि व्यूहेन सप्तक: ॥

एतया देवेभ्य: श्रीकामो याचते श्रियम् ॥

इदं मा इत्येतया ऋचा कश्चित् श्रीकाम: देवेभ्य: श्रियं याचते प्रार्थयते ॥ १६ ॥

सर्वमेधे श्रूयते । अग्निष्टुदग्निष्टोम प्रथममहर्भवतीति प्रकृत्य तस्याग्नेय: पशु: अग्नेय्य: पुरोरुच: सवनान्नेयमहरिति । तत्र कल्पसूत्रे अनुक्तत्वादाग्नेयी: पुरो रुचो दर्शयति ॥

अस्याजरास: सप्तदशाग्निष्टुत्याग्निष्टोमिके प्रथमेऽहनि पुरोरुच आग्नेय्य: ॥

सर्वमेधे अग्निष्टुत्संज्ञके प्रथमेऽहनि अस्याजरासो दमामित्यारभ्य त्वांऽअग्नेरित्येतदन्ता: सप्तदशसङ्ख्या ऋचोऽग्निदेवत्या: पुरोरुचो भवन्ति । अत्र पुरोरुक्शब्देन ऋग्रूपा यजुर्विशेषरूपा अभिधीयन्ते न यजूरूपा: । कुत: "ऋचैव पुरोरुचमिति श्रुते:" । ऋक्प्रधाना वैश्वदेवाद्यावेदनार्थेषु यजूरूपेषु पशुवन्तोऽपि "तं वा एतं पुरोरुचं ऋग्रूपामीति श्रुतेश्च" । तेन येषां पशूनां प्रक्रमो पुरोरुच: सन्ति तेषामेवेदं वेदितव्यं विधानं नोपांशुत्वाभावो ऋक्प्रधानत्वेनाऽनुवेधानां । अत आग्नेयीभि: प्राकृत्य ऋच एव निवर्त्यन्ते नोपयामादीनि यजूंषि ॥

सपर्णधीध्नः । ततो वारहयं तं प्रत्ययाऽऽयं वेनः । इमाऽस्य त्वा, अ-ध्याय, मयठे॰ सहस्र, मूर्धजस्तुपः, यऽद्दृना विश्वार, विश्वकर्मा, यो नः पिताऽ, चक्षतेऽन्मस्य मो देहीत्येवं, या याः प्रतीकचोदिता ऋचः तत्र सर्वत्र ता सूक्तयस्ते सकला ध्येयाः । सूक्तयस्त्रग्रहण अपादेरप्युपलक्षणम् ॥

एषो ह चतस्रस्त्रिष्टुभ ॥(१)

एषो ह देवः । यस्माज्जातं । येन द्यौ, यन्नकन्दसीत्येताश्चतस्त्रिष्टुभः । प्रत्यङ्भना जागतः । चीणि ज्योती च जागतः ॥

आपो ह यच्चिरप्रतीकचोदिते ॥

आपो ह यद्बृहतीर्यच्चिदापहत्येते द्वे ऋचावप्रतीकचोदिते । सूक्तयस्त्वाद्दावध्येये ॥ १५ ॥

वेनस्तत्पञ्च त्रिष्टुभः ॥

वेनस्तत्पश्यदित्याद्याः पञ्चकस्चस्त्रिष्टुभः, यत्र विश्वं, भवत् । तृतीये धामन् । पतेषु व्यूहः ॥

सदसस्पतिं त्र्यचेन मेधाकामो मेधां याचते ॥

सदसस्पतिमद्भुतमित्यादिकेन त्र्यचेन कश्चिन्मेधाकामो मेधां धारणवतीं बुद्धिं याचते प्रार्थयते ॥

प्रथमा गायत्री लिङ्गोक्तदेवता ॥

अत्र त्र्यचे प्रथमा सदसस्पतिमित्येषा गायत्री लिङ्गोक्तसदसस्पति-देवता । प्रियमिन्द्रस्य । व्यूह ॥

द्वितीयाग्नेय्यनुष्टुप् ॥

द्वितीया यां मेधामित्येषा आग्नेयी अग्निदेवत्या अनुष्टुप् । यां

---

(१) अत्र, मस्मा न, प्रतीकोक्ता परीत्य भूतानि, द्वे परमात्मवाद यौ त्रिष्टुभावेव, हानकाण्डसर्वानुक्रमेऽधिक॰ पाठ ॥

आद्ये द्वे ऐन्द्रवायवस्य ॥

आद्ये अस्याजरास इत्यो धूमकेतव इतीमे द्वे ऋचौ ऐन्द्रवायव ग्रहस्य पुरोरुचौ ग्रहणमन्त्रौ ॥

अस्याजरासो वत्सप्रीः ॥

अस्याजरास इतीमामृचं त्रिष्टुभं वत्सप्रीर्ऋषिरपश्यत् । प्रथमद्वितीययोर्व्यूहः । चतुर्थो दशकः तमेकाक्षरः । आवायविद्यस्यापवाद ॥

इरयो धूमकेतवो विरूप ॥

इरयो धूमकेतव इतीमामृचं गायत्रीं विरूपऋषिरपश्यत् । इन्द्रवायू इत्यस्या अपवादः ॥

यज्ञानो मैत्रावरुणस्य गोतमः ॥(१)

यज्ञानो मित्रावरुणेतीमामृचं मैत्रावरुणस्य पुरोरुचं गोतमऋषिरपश्यत् । अयं वामित्यस्या अपवादः । पञ्चमे यमि व्यूहः । गायत्री । युक्ष्व हीत्यस्या आश्विनग्रहणग्रहणे विनियोगः । कुतः मैत्रावरुणग्रहपुरोरुचांमध्ये पाठात् । प्रकृताश्चाश्विनैव क्रमे अयं वां, तं प्रत्नथेत्यमगोमैत्रावरुणग्रहपुरोरुचांमध्ये, या वां कशेत्याश्विनपुरोरुच. पाठाच्च । पञ्चमे यमे इति लिङ्गाच्च । वक्ष्यमाणेषु षट्स्वपि पुरोरुग्मणीष्वाश्विनेनैव क्रमे, आसुते सिञ्चत, दैव्यावध्वर्यू, अधि नद्‌ध्वद्यौ, दस्रा युवाकवो, दैव्याऽध्वर्यू आयातमुपभूषतमित्येतासां सर्वासां व्यक्ताश्विलिङ्गानामाश्विनपुरोरुचा पाठाच्च । या वां कशेत्यस्य बाधः ॥

द्वे विरूपे शुक्रस्य कुत्स ॥

द्वे विरूपे इतीमामृचं त्रिष्टुभं शुक्रग्रहस्य पुरोरुचं कुत्सऋषिरपश्यत् । तं प्रत्नथेत्यस्यापवादः । द्वे विरूपे व्यूहेन दशकः । कुत्रापि व्यूहं

(१) एतत्सूत्रमेव, युक्ष्वाहीत्यस्योत्तरसूत्रमधिक काण्वसर्वानुक्रमेऽस्तीति ॥

ति ॥

आयत्पराशरः शाक्त्यः ॥

आयदितीमामृचं शक्तेरपत्यं पराशरऋषिरपश्यत् ॥

अग्ने शर्द्धात्रिदुहिता विश्ववारा ॥

अग्ने शर्द्धेतीमामृचमत्रिदुहिता अत्रेः पुत्री विश्ववारा इतिनाम्नी अपश्यत् ।

त्वां हि (१) भरद्वाजः ॥

त्वां हि मन्द्रतममितीमां त्रिष्टुभं माहेन्द्रपुरोरुचं भरद्वाजोऽपश्यत् । अस्या अमन्त्रोऽपि माहेन्द्रग्रहणे विनियोगः कल्प्यते । कुतः इन्द्र मरुत्व इति लिङ्गाच्चतुर्थीयपुरोरुचोऽनन्तरं पाठाच्च । मरुत्वतीयस्थिरत्वेन क्रमे माहेन्द्रपुरोरुगुच्यते, महाँ इन्द्रो नृवदिति । इन्द्रस्तुतिरप्यनेनैव क्रमेण माहेन्द्रपुरोरुगुच्यते । महाँ इन्द्रो य ओजसेति । महाँ इन्द्रो नृवदित्यस्यापवादः । वयमहे । इन्द्रं गत्वा । व्यूह. ॥

त्वेऽग्ने द्वे बृहत्यावादित्यस्य ॥

त्वे अग्ने । सुधियुत्वर्येतीमे द्वे बृहत्यौ आदित्यग्रहग्रहणे पुरोरुचौ गृहपमन्यौ ॥

त्वमग्ने वसिष्ठः ॥

त्वमग्ने स्वाहुतेतीमां बृहतीमादित्यग्रहस्य प्रथमां पुरोरुचं वसिष्ठर्षिरपश्यत् । प्रथमे व्यूहाभ्यामष्टकः, तृतीय एकादशकः । चतुर्थः सप्तकः, द्व्यूना । कदा चन स्तरीरसीत्यस्या अपवादः ॥

श्रुधिप्रस्कण्वः ॥

श्रुधि श्रुत्कर्णेतीमां बृहतीमादित्यग्रहस्य द्वितीयां पुरोरुचं प्रस्क-

(१) अत्र द्विवर्णतोऽग्रे माहेन्द्रस्तोत्रदर्शक काण्वसर्वानुक्रमेऽस्तीति ॥

पङ्क्तिरपश्यत् । कदा चन प्रयुच्छसीत्यस्या अपवादः ॥

आदित्यग्रहग्रहणे विश्वेषामदितिर्वामदेवो गोतमः ॥(१)

विश्वेषामदितिरितीमामादित्यग्रहस्य ग्रहणे विनियुक्तां त्रिष्टुभं वामदेवो गौतमऋषिरपश्यत् । यज्ञो देवानामित्यस्या अपवादः । अनयोर्व्यूहः । आदित्यग्रहग्रहणइति केचित्पठन्ति, "उ-सौ वाऽय दधिगृह्णाति समृह्यति यज्ञो देवानामिति पठ्यते" । तत्र अत्यनुकरणमेतत् ॥

महो अग्नेः सावित्रस्य सुगोभानाकः ॥

महो अग्नेरितीमां त्रिष्टुभं सावित्रग्रहस्य पुरोरुच सुगोभानाकऋषिरपश्यत । वाममद्येत्यस्या अपवादः, अनयोर्व्यत्यासो आगतौ ॥

अनुक्तं गायत्रं त्रैष्टुभम् ॥

अनुक्तं अनुक्तच्छन्दस्कं मन्त्रजातं गायत्रच्छन्दस्कं त्रिष्टुप्छन्दस्कं च । तथैव प्राग्युक्तं । इन्द्रस्तुदादित्यवि सप्तदशानां पुरोरुचामनेनैव अतिदेशेनैव गृहेषु विनियोगः कल्प्यः । समाप्ता त्रिष्टुप् ॥ १० ॥

सर्वमेधे यूपते इन्द्रस्तुत्युक्थ्यो द्वितीयमहर्भवतीति प्रकृत्य तथैन्द्रा गृह्या भवन्त्यैन्द्र्यः पुरोरुच सर्वमैन्द्रमहरिति । तथैन्द्रीः पुरोरुच प्रदर्शयति ॥

इन्द्रस्तुदुक्थ्ये द्वितीयेऽहन्यैन्द्र्यः पुरोरुचो द्वादशप्रतीकचोदिते च द्वे त्रिष्टुभौ ॥

इन्द्रस्तुन्नाम्नि उक्थेउक्थ्यसंस्थे सर्वमेधस्य द्वितीयेऽहनि आपथितिन्युरित्यादि इत्यन्तद्व्यता द्वादशऋच । तथा । तं प्रत्नथा, अ-

(१) आरम्भसूत्र आदित्यग्रहणे काण्वसर्वानुक्रमायां नैतत् ॥

यं वेनइमे दे प्रतीकचोदिते च, तथा मह्राँइन्द्रो यओजसा, कदा चन स्तरीरसि, कदा चन प्रयुच्छसीत्येतास्त्रिसः प्रतीकचोदिताथे-त्येवमन्ताः सप्तदशर्च ऐन्द्रय इत्यदैवत्या, पुरोरुचो भवन्ति, ऐन्द्र-वायवादिमाविथान्तानां गृहाणां अभिनष्टदुत्क्रमेण गृहपमनुवा भव-न्तीत्यर्थ । एवं सप्तदशैन्द्रय पुरोरुचः सम्पन्नाः ॥

आपश्चिद्वसिष्ठः ॥

आपश्चिदितीमां त्रिष्टुभं ऐन्द्रवायवस्य प्रथमां पुरोरुचं वसिष्ट ऋषिरपश्यत् । आवायवित्यस्या वाध', आपश्चित् । चतुर्थोदृष्टकः ॥

गावउप पुरुमीढाजमीढौ ॥

गावउपेतीमां गायत्रीं ऐन्द्रवायवस्य द्वितीयां पुरोरुचं पुरुमीढा-ढधी अपश्यतां । इन्द्रवायूइत्यस्या अपवाद ॥

यद्य वसिष्ठः ॥

यदद्य सूरइतीमां गायत्रीं मैत्रावरुणपुरोरुचवसिष्ठोऽपश्यत् । अ-यं वामित्यस्या अपवाद ॥

आसुतेऽसुनीतिः ॥

आसुतइतीमां गायत्रीं आश्विनपुरोरुचं असुनीतिऋषिरपश्य-त् । आवामित्यस्या अपवाद । द्वितीये व्यूहः । तं प्रत्नथा, अयं वे-नइत्यनयोः प्रकृतिवकुकामन्थिग्रहयो विनियोगः ॥

आतिष्ठन्त विश्वामित्रः ॥

आतिष्ठन्तमितीमामृचं त्रिष्टुभं आग्रयणग्रहपुरोरुचं विश्वामित्रो ऽपश्यत् । ये देवासइत्यस्या वाध' ॥

प्रवः सुचीकः ॥ (१)

प्रवो महइतीमां त्रिष्टुभं ध्रुवग्रहणपुरोरुचं सुचीकऋषिरपश्यत् ।

---

(१) सुचीकइति पाठान्तरं ॥

भवान्तौ जागतौ । मूर्धानमित्यस्या बाधः ॥

बृहन्निदिविशोकः ॥

बृहन्निदितीमां गायत्रीमैन्द्राग्नपुरोरुचं विशोक ऋषिरपश्यत् । इन्द्राग्नी इत्यस्या बाधः । आद्य. सप्तकः ।

इन्द्रेहि मधुच्छन्दाः ॥

इन्द्रेहि मत्स्यन्धस इतीमां गायत्रीं वैश्वदेवपुरोरुचं मधुच्छन्दा अपश्यत् । ओमासश्चेत्यस्या बाधः ॥

इन्द्रो वृत्रं विश्वामित्रः ॥

इन्द्रो वृत्रमिति त्रिष्टुभं मरुत्वतीयपुरोरुचं विश्वामित्रोऽपश्यत् । इन्द्र मरुत्व इत्यस्या बाधः ॥

कुत्रास्त्वमगस्त्य ॥

कुत्रास्त्वमित्येतां त्रिष्टुभं मरुत्वतीयपुरोरुचमगस्त्य ऋषिर- पश्यत् । आद्यो व्यूहेन सप्तक । तैरेकोना मरुत्वन्तमित्यस्या अपवा- दः । प्रतीकचोदितासु तिसृषु महाँ इन्द्र इत्यस्या माहेन्द्रग्रहणे विनि- योगो लिङ्गात् । मूर्धानमित्यस्यापवादः । कदा चनेत्यनया प्रजापतिवदा- दित्यग्रहणे ॥

आतस्थौ गौरीवितिः शाक्त्यः ॥ (१)

आतस्थ इति त्रिष्टुभं गौरीवितिरपश्यत् । आदित्यग्रहस्य द्र ष्टा अयमपि विनियोगः । अत्र द्वितीयतृतीययोर्व्यूहः । यस्मा देवता- मित्यस्या अपवादः ॥

इमां ते कुत्सो जगती ॥

इमां ते धियमिति जगतीं सावित्रपुरोरुचं कुत्सोऽपश्यत् । याम- स्यापवादः ॥

(१) शाक्त्यइतिकाण्वपाठः ॥

अनुक्तं गायत्रं त्रैष्टुभम् ॥

यस्यां कण्डिकायामनुक्तछन्दस्कं मन्त्रगणं यथासम्भवं गायत्रं त्रैष्टुभं वा तद्वेदोदाहृतं । इतीन्द्रस्तुत्समासः ॥ १८ ॥

अथ सूर्यस्तुत् । सर्वमेधएव श्रूयते । सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति इति प्रकृत्य तस्य सौर्या गृहा भवन्ति,सौर्यः पुरोरुचः सर्वं सौर्यमसदिति । तत्र सौरीः पुरोरुचोऽत्र दर्शयति ॥

सूर्यस्तुदुक्थ्ये तृतीयेऽहनि सौर्यश्चतुर्दश पुरोरुचस्तिस्रश्च प्रतीकोक्ताः ॥

विभ्राड्बृहदित्यारभ्याक्षणोनेत्येतत्पर्यन्ताश्चतुर्दश ऋचः,तं प्रत्नथाऽयं वेनश्चित्रं देवानामित्येतास्तिस्रः प्रतीकचोदिता इत्येवं सप्तदश ऋचः सूर्यस्तुत्सञ्ज्ञकउक्थ्यसर्वमेधस्य तृतीयेऽहनि पुरोरुचो भवन्ति । ऐन्द्रवायवादिसावित्रान्तानां गृहाणां पूर्वोक्तक्रमेण यथासङ्ख्या भवन्तीत्यर्थः ॥

विभ्राड्बृहज्जगती विभ्राड्सौर्यः ॥

विभ्राड्बृहदित्येता जगती ऐन्द्रवायवपुरोरुच सूर्यपुत्रो विभ्राडपश्यत् । विभ्राड्बृहत् व्यूहः ॥

उदुत्यं तिस्रः प्रस्कण्वः ॥

उदुत्यं, येनापावक,दैव्यावध्वर्यू इत्येतास्तिस्रः प्रस्कण्वोऽपश्यत् । उदुत्यमित्यैन्द्रवायवस्य द्वितीयापुरोरुक् । येनापावकेत्येमैत्रावरुणस्य दैव्यावध्वर्यू इत्याश्विनस्य । रश्मी विभ्राज व्यूहः । त्वष्टर्पेति च । रथेनेति च प्रतीकचोदितासु तिसृषु तं प्रत्नथाऽयंवेनइत्येतयोः प्रसक्तिश्च,शुक्रामन्थिगृहयो विनियोगः । चित्रं देवानामित्याग्रयणगृहे ॥

मानोऽगस्त्यः ॥

आनद्दाभिवितीमां त्रिष्टुभं ध्रुवस्य पुरोरुचमगस्त्योऽपश्यत् ।

यदद्य श्रुतकक्षसुतंकक्षौ ॥

यदद्य कच्चेति गायत्रीं ऐन्द्राग्नपुरोरुचं श्रुतकक्षसुतंकक्षौ । द्वावृषी अपश्यतां । द्वितीयः सप्तकः ॥

तरणिः प्रस्कण्वः ॥

तरणिर्विश्वदर्शत इति गायत्रीं वैश्वदेवपुरोरुचं प्रस्कण्वोऽपश्यत् । द्वितीयः सप्तकः ॥

तत्सूर्यस्य द्वे कुत्सः ॥

तत्सूर्यस्य, तन्मित्रस्येति द्वे ऋचौ त्रिष्टुभौ आदित्य अवत्ननीययोः पुरोरुचौ कुत्स ऋषिरपश्यत् ॥

बण्महाँ द्वे जमदग्निर्बृहतीसतोबृहत्यौ ॥

बण्महा, बट्सूर्येति द्वे बृहत्यौ जमदग्निर्ऋषिरपश्यत् । बण्महामित्यस्य माहेन्द्रग्रहणे विनियोग । बट्सूर्येत्यस्या आदित्यस्य प्रथमे ग्रहणे । बण्महान् । सप्तक । बट्सूर्येत्य । दशकः ॥

श्रायन्त इव नृमेधो बृहती ॥

श्रायन्त इति बृहतीमादित्यस्य पुनर्ग्रहणे पुरोरुचामस्याः नृमेध ऋषि, आद्य सप्तकः ॥

अद्या देवाः कुत्सः ॥

अद्या देवा इति त्रिष्टुप् । कुत्स ऋषि. । इयं आदित्यग्रहणे विनियोगः । आद्यो व्यूह ।

आकृष्णेन हिरण्यस्तूप आङ्गिरसः ॥

आकृष्णेनेति त्रिष्टुभं सावित्रपुरोरुचमाङ्गिरसः पुत्रो हिरण्यस्तूपोऽपश्यत् । द्वितीयो व्यूह, ॥

अनाख्यातं सौर्यं गायत्रं त्रैष्टुभम् ॥

चोदितास्तु । तां सवितेत्यात्मकाम्य शुद्धपी पुरोरुक् । अयं वेन इतिस-स्मिनः, ये देवा मद्यत्वायुवयस्य । आगन्मेति तिसृस्यस्य । विश्वेभिः सौम्यमित्यैन्द्राग्नस्य । सोमामद्दति वैश्वदेवस्य ॥

अगन्नद्न्द्र प्रतिपदः ॥

अगन्निन्द्रेति त्रिष्टुभं प्रथमानुत्तमतीयपुरोरुचं प्रतिपदश्च पर-पश्यत् । तृतीये त्र्यूह ॥

इन्द्राग्नी मित्रावरुणा जगतीं काश्यपो वत्सारः ॥

इन्द्राग्नी इति जगतीमगन्नमतृतीयपुरारुचं काश्यपुत्रो व-त्सारश्चापिरपश्यत् । चाद्ये त्र्यूह । चतुर्थस्थान्भक. ॥

अस्मे रुद्राः प्रगाथः ॥

अस्मे रुद्रा मेहनेतीनां त्रिष्टुभं माहेन्द्रपुरोरुचं प्रगाथश्चापि रपश्यत् ॥

अर्वाञ्चोऽद्या कूर्मो गार्त्समदः ॥

अर्वाञ्चो अद्येति त्रिष्टुभ आदित्यस्य प्रथमपुरोरुचं गृत्समदपुत्रः कूर्मश्चापिरपश्यत् ॥

विन्नेऽद्या लुशोधानाकः ॥

विन्तेऽद्येतीनां त्रिष्टुभं आदित्यस्य पुनर्द्वितीये पुरोरुचं धाना-कपुत्रो लुशश्चापिरपश्यत् । द्वितीये त्र्यूह ॥

विश्वेदेवाः सुहोत्रः ॥

विश्वेदेवाः शृणुतेमां त्रिष्टुभं सुहोत्रश्चापिरपश्यत् । आदित्यग्-हस्य दशा अयवेषां विनियोग ॥

देवेभ्यो हि वामदेवो जगतीम् ॥

देवेभ्यो हि प्रथममिति जगतीं सावित्रपुरोरुचं वामदेवोऽपश्यत् ।

प्रथमतृतीयचतुर्थेषु व्यूहः ॥

**अनुक्तं गायत्रं त्रैष्टुभम् ॥**

अस्मिन्प्रवायूजहल्लोकादृगर्चं अनुक्तं छन्दस्कं मन्त्रगणं गायत्रं त्रैष्टुभं च ज्ञेयं । तथैव प्रागुदाहृत इतिवेदितव्यस्तु दुक्तः ॥ १० ॥

**अथानारभ्याधीतं मन्त्रगणमर्वाकपितृमेधादादित्ययाज्ञवल्क्यौ ददृशतुः ॥**

अथानन्तरमर्वाक्पितृमेधात् । अपेतोयन्त्वित्ययमध्यायः पितृमेधः तेनायमर्थः । प्रवायुमित्यत आरभ्यापेतो यन्तु पणय इत्यतस्मात्प्रागवर्तमानं मन्त्रगणं मन्त्रसमूहं आदित्ययाज्ञवल्क्यौ ददृशतुः । कीदृशं मन्त्रगणं अनारभ्याधीतं । कञ्चन कर्मविशेषमारभ्योपक्रम्याधीतमारभ्याधीतं, न आरभ्याधीतमनारभ्याधीतं । श्रौतकर्मविशेषे क्वाप्यविनियुक्तमित्यर्थः ॥

**प्रवायुं पञ्चदशर्चः पुरोरुग्गायत्र्यो द्वे च प्रतीकोक्ते ॥**

प्रवायुमच्छेत्यत आरभ्य पञ्चदश सङ्ख्या ऋचस्ताः प्रथमया, अयं वेन-इतीमे द्वे प्रतीकोक्ते चेत्येवं सप्तदशगायत्र्यात्मकः पुरोरुग्गणः पुरोरुक्स-मूहः ॥

**प्रवायुसृजिश्वः ॥**

प्रवायुमतीमां त्रिष्टुभं ऋजिश्वा ऋषिरपश्यत् । लिङ्गाद्वायुर्देवता । इन्द्रवायू इत्यस्याः सर्वं प्रागुक्तम् ॥

**मित्रꣳ हुवे द्वे मधुच्छन्दाः ॥**

मित्रꣳ हुवे, दस्रा युवाकव इतीमे द्वे गायत्र्यौ मधुच्छन्दा अपश्यत् ॥

**मित्रं लिङ्गोक्ता ॥ (१)**

(१) लिङ्गोक्तदेवत्या । इति क्वचित्पाठः ॥

मित्रं॰ हुवे इतीयमृक्त्रिष्टोमा मित्रावरुणदेवता ॥

**दस्रा युवाकवऽआश्विनी ॥**

दस्रेत्येषा अश्विदेवत्या । तं प्रत्नथाऽयं वेन इत्यनयोरुक्तम् ॥

**विदद्यदैन्द्रीं कुशिकः ॥**

विदद्येतीमां त्रिष्टुभं इन्द्रदेवत्यां कुशिकोऽपश्यत् । द्वितीयतृतीययोर्व्यूह ॥

**नहि स्पशं विश्वामित्रो वैश्वानरीम् ॥**

नहि स्पशमितीमां त्रिष्टुभं वैश्वानरदेवतां विश्वामित्रोऽपश्यत् । द्वितीयो दशकः । तृतीयो द्वादशक, तेन पूर्ति ॥

**उग्रा विघनिनैन्द्राग्नीं भरद्वाजः ॥**

उग्रा विघनिनेतीमां गायत्रीमिन्द्राग्निदेवतां भरद्वाजोऽपश्यत् । द्वितीयसप्तकः ॥

**उपास्मै सौमीं देवलोऽसितो वा ॥**

उपास्मै गायतेतीमां गायत्रीं सोमदेवत्यां देवलो वा असितो वा ऋषिरपश्यत् । द्वितीये व्यूह ॥

**ये त्वा विश्वामित्रः ॥**

ये त्वा हि हन्यहतीमां त्रिष्टुभं विश्वामित्रऋषिरपश्यत् । इन्द्रो देवता । चतुर्थे व्यूह ॥

**अनिष्ठाऽउग्रो गौरीवितिः ॥**

अनिष्ठाऽउग्र इतीमां इन्द्रदेवत्यां त्रिष्टुभं गौरीवितिरपश्यत् ॥

**आ तु वामदेवः ॥**

आ तून इन्द्रेतीमामृचमिन्द्रदेवत्यां गायत्रीं वामदेवोऽपश्यत् ॥

**त्रयऐन्द्राः ॥**

ये त्वा हि हत्ये । अनिष्ठाऽउग्र, आ तून इत्येते त्रय ऐन्द्रदेवताः ॥

त्वमिन्द्राग्नी नृमेधः पथ्याबृहतीसतोबृहत्यौ ॥

त्वमिन्द्र, प्रभुत, इतीमे च द्वे ऐन्द्री इन्द्रदेवत्ये ऋचो क्रमेण पथ्या बृहतीसतोबृहत्यौ नृमेधऋषिरपश्यत् । त्वमिन्द्रेति पथ्याबृहती । प्र भुनदितिसतोबृहती । त्वमिन्द्र, त्व तूर्णं, व्यूह ॥

यज्ञो देवानां कुत्सः ॥

यज्ञो देवानामितीमां त्रिष्टुभमा दित्यदेवत्यां कुत्सऋषिरपश्यत । पा- दित्ययाज्ञवल्क्याख्यौ कुत्सस्य बाधो मा भूदितिपुनरुक्तं । अतएव वि- ना वचनं पूर्वोक्तऋषिर्न भवतीति ज्ञायते ॥

अद्दधेभिः सावित्रीं जगतीं भरद्वाजः ॥

अद्दधेभिरितीमा सवितृदेवत्यां जगतीं भरद्वाजोऽपश्यत् ॥ २१॥

प्रवीरया पञ्चदशर्चः पुरोरुगगणो द्वे च प्रतीकोक्ति ॥

प्रवीरयेत्याद्या, प्रदद्येभिरित्यन्ताः पञ्चदशसंख्याः ऋचः, तं प्रत्न- थाऽयं वेनइति द्वे प्रतीकयोक्ति चेत्येवमेव सप्तदश पुरोरुगणः पुरोरुचां व्यूहः ॥

प्रवीरया वसिष्ठो वायव्याम् ॥

प्रवीरयेति त्रिष्टुभं वायुदेवतां वसिष्ठोऽपश्यत् । पत्न्ययोर्व्यूह. । नावउपेत्यस्य प्रागुक्तम् ॥

काव्ययो राजानेषु दक्षः ॥

काव्ययोरितीमां गायत्रीं मित्रावरुणदेवतां दक्षोऽपश्यत् । देव्या- वद्ध्वर्यू, तं प्रत्नथाऽयं वेन इत्येतेषां प्रागुक्तम् ॥

तिरश्चीनः परमेष्ठीप्रजापतिर्भावद्वृत्तम् ॥ (१)

तिरश्चीनो विततः इत्यतामृचं भाववृत्तसंज्ञं परमेष्ठीप्रजापतिर- पश्यत् । प्रजापतिर्वा परमेष्ठीऋषिः । भाववृत्तं भावानां पदार्था-

(१) तृचामेरयचकः कात्यसर्वानुक्रमपाठो बोध्यः ॥

ना वृत्ति सूक्ष्मादिर्वृत्तिर्यस्य देवता । तद्भाववृत्त । यस्य भाववृत्त देवता विश्वे देवा देवता वा ॥

प्र रोदसी जगतीं विश्वामित्र ॥

प्र रोदसी इत्येषा ऋच जगती वैश्वानरदेवता विश्वामित्रोऽपश्यत् । आद्ये व्यूह ॥

उक्थेभिर्वृत्रहन्तमा वसिष्ठ ॥

उक्थेभि इत्येषा गायत्रीं वसिष्ठोऽपश्यत् । इन्द्राग्नी देवता ॥

उप नः सुहोत्रो वैश्वदेवीम् ॥

उप नः सूनव इत्येषा गायत्रीं विश्वेदेवदेवता सुहोत्रऋषिरपश्यत् । द्वितीये व्यूह ॥

ब्रह्माणि मेऽगस्त्य, द्वे इन्द्रमरुत्वत्यावादे ॥

ब्रह्माणि मे । अनुत्तमा तइत्येते द्वे ऋचौ त्रिष्टुभौ इन्द्रमरुत्वत्या दे अगस्त्य ऋषिरपश्यत् । इन्द्रो मरुत्वान् देवता । आद्यावती व्यूह ॥

तद्विदाथर्वणा बृहद्दिव ॥

तद्विदास इत्येषा त्रिष्टुभमथर्वण पुत्रो बृहद्दिवऋषिरपश्यत् । अस्या महेन्द्रो देवता ॥

इमाऽउ त्वा द्वे बृहत्यौ मेधातिथिः ॥

इमाऽउ त्वा, अस्याय सिमिद्धे द्वे ऋचौ बृहत्यौ मेधातिथिर्ऋषिरपश्यत् । अनयोरादित्यो देवता । अस्यास्यं । व्यूह ॥

अयं सहस्रं मेधातिथिः सतोबृहतीम् ॥

अयं सहस्रमित्येषामृच सतोबृहती मेधातिथिरपश्यत् । अस्यामादित्यो देवता । चतुर्थो व्यूह । अध्यायो विश्वामित्रम् ॥ ३३ ॥

आनस्त्रयोदशार्चं पुरोदगम्यत्तुष्टुचं प्रतीकयो-

दितं च ॥

आनो यज्ञमित्यारभ्याध्यायसमाप्तिपर्यन्ताश्चतुर्दशसंख्याकास्त्व इमा-ऽउ त्वा, यस्यायमयं० सहस्रमर्द्धर्चकपुणद्वतीदं प्रतीकचादितं चतुर्ऋचं चेत्येवमेषां समदशकः पुरोरुग्गणः । ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहग्रहणमन्त्राणां समूहः ॥

आनो वायव्यां जमदग्निः ॥

आनो यज्ञमितीमामेव बृहतीं वायुदेवतां जमदग्निर्ऋषिरपश्यत् । तृतीयएकादशकस्तैनैकोना ॥

इन्द्रवायू सुसंदृशेन्द्रवायव्यां तापसः ॥

इन्द्रवायू सुसंदृशेतीमां बृहतीमिन्द्रवायुदेवतां । तापसऋषिरपश्यत् ॥

ऋधगित्था मैत्रावरुणीं जमदग्निः ॥

ऋधगित्थेतीमां बृहतीं मित्रावरुणदेवतां जमदग्निऋषिरपश्यत् । आद्ये व्यूहः ॥

आयातमाश्विनीं वसिष्ठः ॥

आयातमितीमां बृहतीमश्विदैवत्यां वसिष्ठोऽपश्यत् । तृतीये व्यूहः ॥

प्रैतु वैश्वदेवीं कण्वः ॥

प्रैतु ब्रह्मणस्पतिरिति बृहतीं विश्वेदेवदेवतां कण्वऋषिरपश्यत् । आद्ययोर्व्यूहः । तृतीय एकादशः ॥

चन्द्रमा अप्स्वैन्द्रीमाङ्क्तिपरिश्रामवादिनीं त्रितऽ आप्त्यः ॥

चन्द्रमा अप्स्वन्तरिति बृहतीमिन्द्रदेवतामाहुतिपरिश्रामवती त्रितसञ्ज्ञ आप्त्य ऋषिरपश्यत् । आद्ये व्यूहः ॥

देव देवं वो मनुर्वैवस्वतो वैश्वदेवीम् ॥

देव देवं वइतीमा बृहतीं विश्वदेवदेवत । विवस्वतोऽपत्य मनुर्द्दृ षिरपश्यत् । आद्यान्त्योर्व्यूह ॥

दिवि पृष्टो मेधऐन्द्रः ॥

दिवि पृष्टइतीम बृहतीम । इन्द्रपुत्रो मेधा ऋषिरपश्यत् । वैश्वानरो देवता ॥

इन्द्राग्नीऽअपात्सुहोत्रः ॥

इन्द्राग्नीऽअपादितीमा बृहतीं सुहोत्रऋषिरपश्यत् । इन्द्राग्नीदेवता । प्रथमद्वितीयचतुर्थपु व्यूह ॥

देवासो हि मनु ॥

देवा सो हीतीमा सतोबृहतीं मनुरपश्यत् । विश्वेदेवादेवता ॥

अपाधमदृह्नृमेधः ॥

अपाधमत् । प्रवऽइतीमे द्वे । नृमेधऋषिरपश्यत । तत्रापाधमदिति सतोबृहती । प्रवइति बृहती इन्द्रो मरुत्वान्उभयोर्देवता ॥ अधीन्द्रा । व्यूह । मरुतो यस्य । व्यूह ॥

अस्येन्मेधातिथि ॥

अस्ये दिन्द्रइतीमां सतोबृहती मेधातिथिरपश्यत । महेन्द्रोदेवता ॥ प्राद्यो व्यूह । प्रतीकात्मानां सर्व मागुक्तम् ॥

दशास्यं कादश्यन्त्या च सतोबृहत्य ॥

अ.ना. यद्यामितत्रयोदशसु दशऋो,देवासा हियो त । एकादशी अपाधमदिति अन्त्या वाऽस्यैद्रिन्द्रइति एता भास्त सतोबृहत्य । "अयुजो जागती सतोबृहती स तद्विपरम्" ॥

शेषा बृहत्य. शेषा बृहत्य. ॥

दशस्य त:द्स्यस्याभ्याऽन्या शेषा दश ऋचो बृहत्य बृहतीछन्द

अषाढं युत्सु गोतमश्चतुर्ऋचं त्रैष्टुभं सौम्यम् ॥

अषाढं युत्सु, सोमो धेनुं, त्वमिमा, देवेन, नवत्येतच्चतुर्ऋचं त्रिष्टुप् छन्दस्कं सोमदेवत्यं गोतमऋषिरपश्यत् । स्वर्षामप्सा, सोमो वीर । व्यूह । सादन्यं । द्वौ व्यूहौ । त्वमिमा । व्यूह । त्वमपः । द्वौ व्यूहौ, त्वमाततन्थ । द्वौ व्यूहौ । त्वं ज्योतिषा । व्यूहः । राया भागं । द्वादशकः । मा त्वा तमत् । व्यूह ॥

अष्टौ व्यख्यच्चतुर्ऋचं त्रैष्टुभं सावित्रमाङ्गिरसो हिरण्यस्तूपः ॥

अष्टौ व्यख्यत् हिरण्यस्तूपइत्येतच्चतुर्ऋचं सवितृदेवतं त्रिष्टुप्छन्दस्कं अङ्गिरसोऽपत्यं हिरण्यस्तूपऋषिरपश्यत् ॥

द्वितीया जगती ॥

अत्र चतुर्ऋचे हिरण्यपाणिः सवितेत्येषा द्वितीया जगती । अष्टौ वि, भीवन्न । दधत् । व्यूहः । आक्रणेन द्वादशकः । सुमृडीकः, द्वौ व्यूहौ । ये ते व्यूह. ॥

उभा पिबतमश्विनं तृचम् ॥

उभा पिबतं । अप्नस्वतीमश्विना, द्युभिरक्तुभिरित्येतत्तृचं आश्विनं । अश्विदैवतम् ॥

उभा पिबतं प्रस्कण्वो गायत्रीम् ॥

उभा पिबतं इतीमामृचं गायत्रीं प्रस्कण्वोऽपश्यत् ॥

अप्नस्वतीमश्विना त्रिष्टुभौ कुत्सः ॥

अप्नस्वतीमश्विना, द्युभिरक्तुभिरिमे ऋचौ त्रिष्टुभौ कुत्सऋषिरपश्यत् । अश्व त्वे । द्वौ व्यूहौ । आक्रणेनेत्यत्र प्रागुक्तम् ॥

रात्री विपथ्याबृहतीं रात्रिदेवत्यां कशिपा भरद्वाजदुहिता ॥

आरात्रि पार्थिवमितीमामृचं रात्रिदेवत्यां पथ्याबृहती भरद्वाज-दुहिता कशिपानाम्नी अपश्यत् ॥

## उपस्तदुपव्यां परोष्णिहं गोतम ॥

उपस्त्वादितीमामृचमुपव्या उर्वीदेवता परोष्णिहं परोष्णिक्छ-न्दस्कां गोतमऋषिरपश्यत् ॥

## प्रातरग्निं वसिष्ठः सप्तर्चम् । (१)

प्रातरग्निं, प्रातर्जितं, भगप्रणेत, उतेदानीं । भगएव । समध्व-राय । अश्वावतीरित्येतत्सप्तर्चं वसिष्ठऋषिरपश्यत् ॥

## आद्या जगती बहुदेवत्या ॥

अस्मिन्सप्तर्चे आद्या प्रातरग्निमित्येषा जगतीछन्दस्का बहुदेवत्या अग्नीन्द्रमित्रावरुणाश्विभगपूषब्रह्मणस्पतिसोमरुद्रदेवतेत्यर्थः । चतु-र्थ एकादशकः ॥

## पञ्च भगदेवत्यास्त्रिष्टुभ ॥(२)

प्रातर्जितमित्याद्याः पञ्च ऋचो भगदेवत्यास्त्रिष्टुभ । राजा चिद्यं । भग प्रणेतः । उतेदानीं । उतोदिता । वयं देवानां । तेन वयं । समध्वराय । एषु व्यूह ॥ रथमिव । द्वादशकः ॥

## अन्त्योषस्या ॥ (३)

त्रिष्टुबित्यनुवर्त्तते । अश्वावतीरित्येषा त्रिष्टुप् सप्तर्चस्यान्त्योषस्या उषादेवतेत्यर्थः ॥ पञ्चमे व्यूह ॥

## पूषन्तव सुहोत्र ॥

पूषन्तवेतीमामृच सुहोत्रऋषिरपश्यत् ॥

---

(१) प्रातर्जिनं भगं वासिष्ठो भगदेवत्यां त्रिष्टुभम् ॥

(२) प्रातर्जितं भग वासिष्ठो भगदेवत्यां त्रिष्टुभमिति काण्वसर्वानुक्रमपाठः ॥

(३) इद काण्वसर्वानुक्रम नास्ति ॥

पथस्पथः परिपतिमिष्टिजिह्मः ॥

पथस्पथइतीमामृजिश्वऋषिरपश्यत् ॥

एते पौष्ण्यौ गायत्रीत्रिष्टुभौ ॥

एते ऋचौ पूषं तव पथस्पथ, इत्येते पौष्ण्यौ पूषदेवत्ये यथाक्रमं गायत्रीत्रिष्टुभौ । पूषमिति गायत्री । पथस्पथइति त्रिष्टुप् । क्रामेन । समो रासत् ॥

त्रीणि पदा वैष्णव्यौ गायत्र्यौ मेधातिथिः ॥

त्रीणि पदा, तदिमास इतीमे विष्णुदेवते गायत्रीछन्दस्के मेधातिथिऋर्षिरपश्यत् । विष्णुर्गोपाः । व्यूहः ॥

घृतवती भुवनानां भरद्वाजो द्यावापृथिव्या जगतीम् ॥(१)

घृतवती भुवनानामितीमामृचं द्यावापृथिवीदेवतां जगतीछन्दस्कां भरद्वाजऋषिरपश्यत् ॥

ये नो लिङ्गोक्तदेवतां त्रिष्टुभं विहव्यः ॥

ये नः सपत्ना इतीमामृचं लिङ्गोक्तदेवतां त्रिष्टुभं विहव्यऋषिरपश्यत् । इन्द्राग्नी वसवो रुद्रा आदित्याश्च लिङ्गोक्ताः । वसवो रुद्रायतुर्यकः ॥

आ नासत्या हिरण्यस्तूप आश्विनीं जगतीम् ॥

आ नासत्या इतीमामृचमश्विदेवत्यां जगतीछन्दस्कां हिरण्यस्तूपऋषिरपश्यत् ॥

एष वो मारुतीं त्रिष्टुभमगस्त्यः ॥

एष व इतित्रिष्टुभं मरुद्देवत्यां अगस्त्योऽपश्यत् । मांदार्यस्यादौ

(१) अत्र सूत्रेऽनुस्वाराभावात् काण्वसर्वानुक्रमपाठो नोह्यः ॥

व्यूहो । एषा यासीष्ट । व्यूढे छन्दसि दशक. ॥

सहस्तोमास्त्वृषिसृष्टिप्रतिपादिकान् त्रिष्टुभं यज्ञः प्राजापत्य ॥

सहस्तोमा इतित्रिष्टुभमृषिसृष्टेः प्रतिपादयित्री प्रजापतेः पुत्रो यज्ञसञ्ज्ञोऽपश्यत् । ऋषयो देवता. । सहस्तोमा द्वादशक, षष्ठो द, शक. ॥

आयुष्यं वर्चस्यं तृचं दच्च उष्णिक्कूकुभौ त्रिष्टुभो हिरण्यस्तुतिः ॥

आयुष्यं । न तत् । यदाबध्नन्नित्येतत्तृचं दक्षोऽपश्यत् । आ-धिनृचे तिस्र ऋचो यथाक्रममुष्णिक्ककुभौ त्रिष्टुप्छन्दस्का । षट् सप्तासप्तदशाक्षरा ककुभि । तत्र आयुषमुष्णिक । आयुः यद्वल', रायः सप्तक । द्वौ अष्टकौ । तेनाधिका पुरउष्णिगिय । न तत । ककुभि एकाधिका । यदाबध्नन् । त्रिष्टुप् । तृतीयो द्वादशक, चतुर्थो दश का । एतत्तृचं हिरण्यस्तुति । हिरण्यदैवतमित्यर्थः ॥

उत नऽइतित्रिष्टो बहुदैवत्यान्न त्रिष्टुभम् ॥

उत नइतित्रिष्टुभं बहुदैवत्यां ऋजिश्वोऽपश्यत । उत न' होवू दौ । अ दश, षष्ठ, पज्जइएकपात्, पृथिवी समुद्र, विश्वेदेवाश्च देवता ॥

इमा गिरः कूर्मो गार्त्समदऽआदित्यदैवत्या त्रिष्टुभम् ॥

इमा गिरऽइत्येतामृचमादित्यदैवत्या त्रिष्टुभं गार्त्समदपुत्र कूर्म-ऋषिरपश्यत् ॥

सप्त ऋषय इतीयमध्यात्मवादिनो जगती ॥

सप्त ऋषय, इतीयमध्यात्मवादिनो जगती सप्त ऋषयो देवता । एकाधिका । पादाक्षरनियमो नास्ति ॥

उत्तिष्ठ तृचो ब्राह्मणस्पत्यः ॥

उत्तिष्ठ, प्रनूनं । ब्रह्मणस्पते इत्यय तृचो ब्रह्मणस्पतिदैवतः ॥

आद्ये बृहत्यौ काण्वो घोरः ॥

अस्मिंस्तृचे उत्तिष्ठ, प्रनूनमितीमे आद्ये ऋचौ बृहत्यौ घोरो घोरपुत्रः कण्व ऋषिरपश्यत् । देवयन्तः व्यूहः । मन्त्र. । द्वौ व्यूहौ ॥

अन्त्या त्रिष्टुभं गृत्समदः ॥

अन्त्यां ब्रह्मणस्पतइतीमां त्रिष्टुभं गृत्समदोऽपश्यत् । बृहस्पते । व्यूहः ॥

यऽइमां चतुर्ऋचं प्रतीकोक्ताम् ॥

यऽइमा चतुर्ऋचं प्रतीकोक्तम् । यऽइमा विश्वा भुवनानि । विश्वकर्मा ह्यजनिष्ट, यो नः पिता जनिता । अन्नपतेऽन्नस्य नो देहीत्येतच्चतुर्ऋचमनाध्याये प्रतीकोक्तम् । पूर्वमेव पठितत्वात्प्रदेशान्तरेणोपात्तम् ॥

अपेतोऽध्यायः पितृभ्यऽआदित्यस्य देवानां वा ॥(१)

अपेतो यन्तु पणयऽइत्ययमध्याय पितरः पितृदेवत्यः । आदित्य आर्षेय् । आदित्योऽस्य ऋषिरित्यर्थः । देवानां वा, देवा वा अस्याध्यायस्य ऋषय इत्यर्थः ॥

आद्या गायत्री परं यजु ॥

अस्मिन्नध्याये आद्या अपेत, इति गायत्री । ततः परं । द्युभिरक्तोभिरित्येतद्यजुः साम्नपङ्क्ति । पलाशशाखया व्यूहने विनियोगोऽस्याः ॥

सविता ते गायत्री ॥

---

(१) अपेतोऽनुवाकः पितृभ्य आदित्यस्यार्ष देवानां वेति काण्वसर्वानुक्रमपाठः ॥

नीं शुनःशेपऋषिरपश्यत् । अपामार्गैरपमार्जने विनियोगः । अन्त्ययोर्व्यूहः । सुमित्रिया न इत्यस्य प्रागुक्तम् । स्नाने विनियोगः ॥

अनड्वाहमानडुह्यनुष्टुप् ॥ (१)

अनड्वाहमन्वारभामह, इतीयमृगानुष्टुभी अनडुद्देवता अनुष्टुप् छन्दः अनडुत्पुच्छान्वारम्भे विनियुक्ता । उद्वयमित्यस्य तु प्रागुक्तम् । आगमने विनियोगः ॥

इमं जीवेभ्यः सङ्कसुको मृत्युदेवत्यां त्रिष्टुभम् ॥

इमं जीवेभ्य, इति त्रिष्टुभं मृत्युदेवत्यां सङ्कसुकोऽपश्यत् । ग्रामश्मशानान्तरे मर्यादालोष्ठनिधाने विनियोगः ॥

आयुष्मानग्नेऽग्नेयीं त्रिष्टुभं वैखानसः ॥ (२)

आयुष्मानग्न, इतीमामग्निदेवतां त्रिष्टुभं वैखानसऋषिरपश्यत् । औपासने आहुतिहोमे विनियोगोऽस्याः । आद्यतीयो द्व्यृचः । चतुर्थी द्वादशकः ॥

परीमेऽनुष्टुभमैन्द्रीं भारद्वाजः शिरिंबिठः ॥

परीमे गामित्यनुष्टुभमिन्द्रदेवतां भरद्वाजस्यापत्यं गिरिंबिठऋषिरपश्यत् । परिदानवदने विनियोगोऽस्याः । द्वितीययोर्व्यूहः ॥

क्रव्यादमग्निं त्रिष्टुभमाग्नेयीं दमनः ॥

क्रव्यादमग्निमिति त्रिष्टुभं अग्निदेवतं दमनऋषिरपश्यत् । अहार्यौपासनस्य निरसने विनियोगोऽर्धस्य । इहैवायमित्युत्तरार्धस्य जपे विनियोगः ॥

वहवपाञ्जातवेदसो त्रिष्टुप् ॥

---

(१) आनुष्टुभमिति काण्वसर्वानुक्रमपाठः ॥

(२) इद सूक्त पूर्वापरीभावेन काण्वसर्वानुक्रमे पाठो बोध्य. ॥

वह वपामितीयमृक् जातवेदसी जातवेदोदेवत्या त्रिष्टुप्। मध्यमाष्टकायां वपाहोमे विनियोगोऽस्याः॥

स्योना पृथिवि मेधातिथिः पार्थिवीं गायत्रीम्॥

स्योना पृथिवीति गायत्री पार्थिवी पृथिवीदेवता यजुरन्ता मेधातिथिदृष्टा परपक्षात्। यस्या अन्ते अपनः शोशुचदघमिति यजुः। प्राजापत्या गायत्री। अस्य सम्बन्धिमरणनिमित्ते स्नाने विनियोगः॥

अस्मात्त्वमाग्नेयी गायत्र्यनिरुक्ता॥

अस्मात्त्वमधिजातोऽसीति गायत्री अग्निदेवता। अनिरुक्ता मध्येऽग्निपदप्रयोगशून्या। साग्निकस्य प्राणप्रतिपत्त्यन्ते दाहात्पूर्वं आज्याहुतिहोमे विनियुक्तम्॥ ४॥

ऋचंवाचम्पञ्चाध्यायी दध्यङ्ङाथर्वणो दृष्टाग्निकाश्वमेधिकवर्जम्॥

ऋचं वाचं। देवस्य त्वा हि, स्वाहा प्राणेभ्यः, ईशावास्यमितीमां पञ्चाध्यायीं अग्निकाश्वमेधिकमन्त्रवर्जितामथर्वणः पुत्रो दध्यङृषिर्ददर्श। दृष्टवान्। "दध्यङ् ह वा आथर्वण एतं० शुक्रमेतं यज्ञविदां चकारेति श्रुतेः"। पञ्चानामध्यायानां समाहारः पञ्चाध्यायी। अपवाद आग्निकाश्वमेधिकवर्जमिति, उभय भीतये त्वेतदाग्निकम्। अग्निष्ठं० हृदयेनेत्याद्यध्यायसमाप्तिं यावदाश्वमेधिकं तद्वर्जयित्वा। आग्निकाश्वमेधिकस्य च नायमृषिरित्यर्थः। वैश्वदेव इति बहुदेवत इत्यर्थः। तथा च यास्कः। "यत्तु किञ्चिद्बहुदेवतं वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिरिति"॥

आद्योऽध्यायः शान्त्यर्थो वैश्वदेवः॥

अस्यां पञ्चाध्याय्यामाद्यः प्रथम ऋचं वाचमित्ययमध्यायो विश्वदेवदेवतः शान्त्यर्थः। प्रथमं साधकयोः शान्तिकरणार्थः॥

आयांसि यजूंषि ॥

आयांसि यस्य वायमित्यादीनि यजूंषि । अत्रैषां चतुर्णां दैवीजग- तीच्छन्दः । आग्नेयं यजुर्जगती । लिङ्गोक्ता अङ्गादयो देवता ॥

यन्मे बार्हस्पत्या पङ्क्तिः ॥

यन्मे छिद्रमितीयं बृहस्पतिदेवत्या पङ्क्तिः । व्यूहेन चत्वारि षडक्षरत्वात् । अथ भूर्भुवः स्वरात्मसमित् । मयात्मपिन इति त्र्य- स्य छन्दोदेवतादि सर्वं प्रागुक्तम् । ऋषिरत्र दध्यङ्ङाथर्वण ऋषिरिति विशेष ॥

कया त्वमैन्द्र्यनिरुक्ता गायत्री ॥

कया नस्त्वं न, इतीयं गायत्री अनिरुक्ता ऐन्द्री इन्द्रपदमयोग्य विना- पीन्द्रदेवत्या । आद्ये द्वे व्यूहे ॥

इन्द्रो विश्वस्य विराड्द्विपदा ॥

इन्द्रो विश्वस्येतीयमृक् विराड्द्विपदा । इन्द्रो देवता । विंश- त्यक्षरा द्विपदा विराडित्युच्यते । तथा चोक्तमृक्प्रातिशाख्यम् । "विं- शतिका द्विपदा विराज इति" । तथा तदर्धमेकपदा । एतदर्धं विंश- त्यर्धं वा एकपदा दशाक्षरेत्यर्थः । सोऽपि विराडुच्यते ॥

शं नो द्वे अनुष्टुभौ ॥

शन्नो मित्रः, शन्नो वात इत्येते द्वे ऋचौ अनुष्टुभौ । शन्नो भवतु व्यूहः । शन्नो वात, इत्यत्र वो वाग्मी । व्येन व्यूहा । लिङ्गोक्तपादत्र लिङ्गोक्ता देवता ॥

अहानि द्विपदा गायत्री ॥

अहानि शमितीयं द्विपदा गायत्री । अहानि रात्रयश्च देवता ॥

